निष्पत्त्याइति १०। यत्तूक्तंसंस्कृतस्यस्वाध्यायस्यविनियोगादर्शनात् नसंस्कारइति तत्राह-संस्कारसिद्धिः क्रत्वध्ययनविधिद्वयोपादानादिति ११। क्रतुविधयोविपयावबोधमपेक्षमाणास्तदवबोधेस्वाध्यायं विनियुञ्जते। अध्ययनविधिश्चलिखितपाठादिव्यावृत्त्याध्ययनसंस्कृतत्वंस्वाध्यायस्यगमयति। अतउभयोपादानात्तत्सिद्धिः। ननुसंस्कारोनामादृष्टातिशयः सचनस्वाध्यायगतः तव्यप्रत्ययेनस्वपदोपात्तप्रकृत्यर्थभूताध्ययनोपरक्तायामावनायाअपूर्वाभिधानात्। ततः कथंस्वाध्यायस्यसंस्कृतत्वमितितत्राह—तव्यःकर्मगादृष्टवाचीति १२। अत्रतव्यप्रत्ययस्यकर्माभिधायितयाकर्मकारकस्यस्वाध्यायस्यतव्यप्रत्ययार्थप्रतिप्रकृत्यर्थादध्ययनादपिप्रत्यासन्नत्वात् स्वाध्यायगतमेवापूर्वंतव्यप्रत्ययोवक्ति अपूर्वस्यधात्वर्थमन्यत्वनियमेऽपितदुपरक्तत्वानियमादिति भावः। यच्चोक्तमन्याङ्गंनार्थप्रमापकमित्यदृष्टान्तरं-तदसत्। यतोमन्त्राणां स्वतन्त्रादृष्टशेषाणांतथात्वंयुज्यते इहतुस्वाध्यायाश्रितमदृष्टं तस्यचस्वाध्यायगताक्षरसामर्थ्यसिद्धार्थावबोधेफलेसतिफलान्तरकल्पनायोगात् प्रामाण्यस्योपबृंहकमेवादृष्टं ननुप्रतिबन्धकमित्याह—स्वतन्त्रादृष्टाशेषत्वान्नत्वार्थप्रमाप्रतिबध्यतइति १३। सक्तुन्यायेनकर्मकारकप्राधान्येपरित्यक्तेस्वतन्त्रादृष्टमेवात्रापिस्यादित्यत आह—यथाश्रुतोपपत्तेर्नसक्तुन्यायइति १४। सक्तुपुगत्यभावात् श्रुतं परित्यज्याश्रुतंकल्पयतांनाम नेहतद्युक्तंप्रदर्शितत्वादित्यर्थ। इत्थमध्ययनविधेर्दृष्टार्थत्वंप्रसाध्यार्थावबोधपर्यन्ततांनिराकर्तुंपूर्वपक्षयति—वैधमर्थनिर्णयंभट्टगुरूविधेःपुमर्थावसानादिति १। सर्वत्रविधे.पुरुषार्थपर्यवसायित्वनियमादत्रापिपुरुषार्थभूतंफलवदर्थनिश्चयमध्ययनविधिप्रयुक्तं भट्टगुरूमन्येते। ननुसकृदध्ययनादावृत्तिसहिताद्वार्थनिश्चयोनोपलभ्यतइत्याशङ्क्य तथासतितत्सिद्धयेसोऽध्ययनविधिरर्थनिश्चयहेतुंविचारंकल्पयिष्यतीत्याह—सविचारमाक्षिपेदिति २। ननुस्वविधेयतदुपकारिणोरेवविधि प्रयोजकइतिसर्वत्रनियमः तथासत्येतादृशंकथमत्राध्ययनविधिराक्षेप्स्यतीत्यत आह—अविधेयानुपकार्याक्षेपोवघातावृत्तिवदिति ३। व्रीहीनवहन्तीत्यत्रावघातमात्रंविधेयंनतुतदावृत्तिः तस्याअधात्वर्थत्वात् नापिसाविधेयोपकारिणी अन्तरेणावृत्तिंसकृन्मुशलघातमात्रादवघातसिद्धे। तथापितण्डुलनिष्पत्तिफलसिद्धयेसाविधिरावृत्तिंयद्वदाक्षिपेत तद्वत्प्रकृतेप्यवगन्तव्यम्। ननुवेदमात्राध्यायिनोऽर्थावबोधानुदयेऽपिव्याकरणाद्यङ्गसहितवेदाध्यायिनस्तदुदयसद्भावात्तंप्रतिव्यर्थंविचारविधिर्नकल्पयेदित्याशङ्क्यार्थगतविरोधपरिहारायापेक्षितएवविचारइत्याह—साङ्गाध्ययनात्तद्भावेविचारोऽर्थविरोधापनुदिति ४। सिद्धान्तयति—प्राप्तिस्तुगवादिवत्पुमर्थत्वाद्विधिस्तदन्तइति ५। यथाफलभूतस्यक्षीरादेर्हेतवोगवादयोऽपिपुरुषैरर्थ्यन्ते तथा-

---

१ भट्ट' कुमारिलभट्टपादः। गुरु. प्रभाकरगुरु।

फलवदर्थावबोधहेतोरक्षरप्राप्तेरपिपुरुषार्थत्वात् अध्ययनविधिरक्षरप्राप्त्यवसानोवगन्तव्यः । नन्वक्षरप्राप्ते पुरुषार्थत्वंफलवदर्थावबोधप्रयुक्तंचेत्तर्हितद्बोधस्यमुख्यपुरुषार्थत्वात् बोधान्तएवविधि किंनस्यादित्यतआह—फलवद्बोधान्तत्वेअध्ययनाकार्त्स्न्यमिति ६ । बोधस्यहिफलंकर्मानुष्ठानं तथासतियस्याब्राह्मणादेर्यस्मिन्बृहस्पतिसवादावधिकारस्तस्यतद्वाक्यमात्राध्ययनंस्यात् नतुराजसूयादिवाक्याध्ययनं तत्रप्रवृत्त्यादिफलाभावात् । स्वपक्षेतुनायंदोषइत्याह—कृत्स्नप्राप्तिर्नपार्थेति ७ । नचाबोधकत्वेऽर्थावबोधएवनसिध्येदितिशङ्कनीयम् प्रमाणस्यप्रमेयबोधकत्वस्वाभाव्यात् लौकिकाप्तवाक्यानामन्तरेणैवविधिंबोधकत्वदर्शनादित्याह—लोकवन्नैनोबोधइति ८ । ननुबोधस्यविधिफलत्वेबोधकाममुद्दिश्यविधातुंशक्यत्वात् सुलभोधिकारीस्यादित्याशङ्क्यप्राप्तिपक्षेऽपि प्राप्तिकाममुपनीताष्टवर्षब्राह्मणोऽधिकारीसुलभएवेतिपरिहारंस्पष्टत्वादुपेक्ष्यबोधस्यकाम्यत्वंदूषयति—सोऽकाम्यः प्राग्बोध्यमानामानयोरिति ९ । बोध्यस्याग्निहोत्रादिलक्षणवेदार्थस्याध्ययनात्प्राक्सन्ध्योपासनादिवत्पित्राद्युपदेशतएवभानेसिद्धत्वादेवसोऽर्थबोधोनकाम्यः अभानेकामयितुमशक्य ज्ञातएवविषयेकामनानियमात् । ननु सामान्यतोज्ञातेविशेषतोबुभुत्सासंभवति यद्वा विशेषतोऽपि पित्राद्युपदेशादवगतेसत्यौपदेशिकज्ञानस्यप्रामाण्यनिर्णयायपुनर्बोधकामनायुक्तैवेत्याशङ्क्यैवमप्यर्थावबोधमुद्दिश्याध्ययनविधानंनसम्भवतीत्याह—उद्देशायोगादिति १० । अग्निहोत्रादिविशेषज्ञानानांनतावदेकबुद्ध्याविशेषाकारेणोद्देशःसंभवति अनन्तत्वात्सामान्याकारेणोद्देशेसामान्यमेवविधिफलंस्यान्नतुज्ञानविशेष ततोनोद्देशोयुक्त । नन्वर्थावबोधमुद्दिश्योच्चारणाभावेवेदस्यस्वार्थेतात्पर्यंनस्यादित्याशङ्क्य उपक्रमादिलिङ्गगम्यंतात्पर्यंशब्दबलादेवसिद्ध्यतीत्याह—तात्पर्यंशब्दादिति ११ । तर्ह्यर्थज्ञानमुद्दिश्यशब्दोच्चारणंलोकेप्यर्थंस्यादितिचेन्न । पुरुषसम्बन्धकृतदोषाख्यप्रतिबन्धपरिहारार्थत्वादित्याह—उद्दिश्योच्चारणंदोषघ्नंलोकइति १२ । नन्वध्ययनविधेर्बोधान्तत्वाभावेविचारशास्त्रंनप्रवर्तेत प्रयोजकाभावादित्याशङ्क्याह—विचारउत्तरविधिप्रयुक्तउपपद्यतइति १३ । क्रतुबोधविषयः साङ्गवेदाध्ययनादापाततःप्रतिपन्नाः विरोधपरिहारेणप्रतिष्ठितंनिर्णयज्ञानमन्तरेणानुष्ठापयितुमशक्नुवन्तस्तन्निर्णयायक्रतुविचारंप्रयोजयन्ति । श्रवणविधिस्तुसाक्षादेवब्रह्मविचारंविधत्ते । एवंचसतिश्रवणविधेः स्वविधेयप्रयोजकत्वंक्रतुविधीनांचविधेयोपकारिप्रयोजकत्वमित्युपपद्यतेतराम् । अध्ययनविधिप्रयुक्तिपक्षेतु तद्विधेःक्रतुद्वारास्वर्गसिद्धिपर्यन्तत्वात् क्रत्वनुष्ठानस्यापितत्प्रयुक्तौक्रतुविधिवैयर्थ्यमापद्येत । नन्वध्ययनविधेस्त्रैवर्णिकमात्रंप्रतिनित्यत्वात्तत्प्रयुक्तौविचारस्यापितल्लभ्येतनान्यथेतिचेत्—क्रतुविचारस्यत्रैवर्णिकमात्रेऽपिनित्यत्वसिद्धे किंवाब्रह्मविचारस्य तत्रा—

द्योऽस्मन्मतेऽपिसमइत्याह—अतोनित्यःक्रतुविचारस्त्रैवर्णिकमात्रस्येति १४ यतोऽकरणेप्रत्यवायश्रवणात् क्रतवस्त्रैवर्णिकानांनित्याअतइत्यर्थः । द्वितीयोऽनिष्टइत्याह—ब्रह्मविचारःपुनः परमहंसस्यैवेति १५ नित्योनुपन्नइति ननूक्तरीत्याध्ययनस्याक्षरग्रहणान्तत्वेऽर्थज्ञानमविहितंस्यात् मैवम् वाक्यान्तरेणतद्विधानात् ब्राह्मणेननिष्कारणोधर्मःषडङ्गोवेदोध्येयोज्ञेयश्चेतितद्विधिः तत्रनिष्कारणशब्देनाध्ययनज्ञानयोःकाम्यत्वंनिवार्यते अर्थज्ञाने पुरुषप्रवृत्तिकरंवचनद्वयंशाखान्तरगतंनिरुक्तकारोयास्कएवमुदाजहार—अथापिज्ञानप्रशंसाभवत्यज्ञाननिन्दाच स्थाणुरयंभारहारःकिलाभूदधीत्यवेदंनविजानातियोर्थम् । योऽर्थज्ञइत्सकलंभद्रमश्नुतेनाकमेतिज्ञानविधूतपाप्मा । यद्गृहीतमविज्ञातंनिगदेनैवशब्द्यते । अनग्नाविव शुष्कैधोनतज्ज्वलतिकर्हिचिदिति[1] । अस्मिन्मन्त्रद्वयेयोऽर्थज्ञइत्यनेनैवार्धेनवेदार्थज्ञानंप्रशस्यते इतरेणार्धत्रयेणज्ञानराहित्यंनिन्द्यते योवेदार्थंजानातिसोऽयमिहलोकेसकलंश्रेयःप्राप्नोति तथातेनज्ञानेनपापक्षयेसतिप्रेतःस्वर्गंप्राप्नोति तदेतदैहिकमामुष्मिकंचज्ञानफलंतैत्तिरीयामघोदाहरणेनतदीयतात्पर्याभिधायिब्राह्मणेनचस्पष्टीचक्रुः—तदेषाऽभ्युक्ता येअर्वाङुतवापुराणेवेदंविद्वांसमभितोवदन्त्यादित्यमेवतेपरिवदन्तिसर्वेअग्निंद्वितीयंतृतीयंचहंसमिति[2] । यावतीर्वैदेवतास्ताःसर्वावेदविदिब्राह्मणेवसन्तितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनमस्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताःप्रीणातीति[3] । वेदंविद्वानर्थाभिज्ञःपुरुषः सचद्विविधः अर्वाचीनकालेसमुत्पन्नश्चतुर्दशविद्यास्थानकुशलःकश्चिदुपाध्यायः पुरातनकालेसमुत्पन्नोव्यासादिश्च तमेतमुभयविधंविद्वांसंविद्यामदधनमदकुलमदोपेताःपण्डितंमन्यायेपुरुषाअभितोविद्यादिषुदूषयन्ति तेसर्वेप्यादित्यमेवप्रथमंदूषयन्ति आदित्यापेक्षयाद्वितीयमग्निंदूषयन्ति तदुभयापेक्षयातृतीयंहंसंदूषयन्ति हन्तिसदागच्छतीतिहंसोवायुः अग्न्यादिरूपत्वंचवेदविदआम्नातम्—अग्नेर्वायोरादित्यस्य सायुज्यंगच्छतीति । नकेवलमेतद्देवतात्रयं किन्तु सर्वाअपिदेवतावेदविदिवसन्ति ब्राह्मणान्वेदविदोदृष्ट्वास्मृत्वावाप्रतिदिनंनमस्कुर्यात् नतुतस्मिन्विद्यमानमपिदोषंकीर्तयेत् एवंसतितत्रमन्त्रार्थभूताःसर्वाअपिदेवतावेदार्थविदास्मर्यमाणतयावदीयहृदयेवस्थिताअयंनमस्कर्तातोषयति नचैतदध्ययनस्यैवफलमितिशङ्कनीयम् विद्वांसमित्याम्नातत्वात् अन्यथावेदमधीयानमित्याम्नायेत । तस्मात्सर्वदेवताबुद्ध्याप्राणिभिःपूज्यस्यवेदार्थविदोलोकद्वयेऽपिश्रेयःप्राप्तिरुपपद्यते यस्तुवेदमधीत्यार्थंनविजानातिसोऽयंपुमान्भारमेवहरतिधारयति स्थाणुरितिदृष्टान्तः छिन्नशाखंशुष्कंवृक्षमूलंस्थाणुशब्देनोच्यते सचयथेन्धनार्थमेवोपयुज्यते नतुपुष्पफलार्थम् तथाकेवलपाठक-

१ नि० १.१८. । २ तै० आ० द्वितीयाध्याये । ३ तै० आ० द्वितीयाध्याये. ।

स्यन्नात्यत्वंनभवतीत्येतावदेव नत्वनुष्ठानंस्वर्गादिफलसिद्धिर्वास्ति किलेत्यनेनलोकप्रसिद्धिर्द्यो-त्यते लोकेपिपाठकस्ययावतीधनादिपूजाततोऽप्यधिकाविदुषिदृश्यते किञ्च यद्वेदवाक्यमाचार्या-द्गृहीतमर्थज्ञानरहितंपाठरूपेणैवपुनःपुनरुच्चार्यते तत्कदाचिदपिनज्वलतिस्वार्थंनप्रकाशयति य-थाग्निरहितप्रदेशेप्रक्षिप्तंशुष्ककाष्ठंनज्वलतितद्वत् तथासति तस्यवाक्यस्यवेदत्वमेवमुख्यंनस्यात् अलौकिकपुरुषार्थोपायंवेत्त्यनेनेतिवेदशब्दनिर्वचनम्। तथाचोक्तम्—प्रत्यक्षेणानुमित्यावायस्तूपा-योनबुध्यते । एनंविदन्तिवेदेनतस्माद्वेदस्यवेदतेति १ अतोमुख्यवेदत्वसिद्धयेज्ञातव्यएवतदर्थः । किञ्चात्रयास्केनकाचिदन्याप्यृगुदाहृता—उतत्वःपश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनाम् । उतोत्वस्मैतन्वंविसस्रेजायेवपत्यउशतीसुवासाइति।तत्रपूर्वार्धस्यतात्पर्यंसएवदर्शयति—अप्येकः पश्यन्नपश्यतिवाचमपिचशृण्वन्नशृणोत्येनामित्यविद्वांसमाहार्धमिति । अस्यायमर्थः—यःपुमान-र्थंनवेत्तितंप्रतिपूर्वार्धेनमन्त्रोब्रूते एकःपुरुषःपाठमात्रपर्यवसितोवेदरूपांवाचंपश्यन्नपिनसम्यक्पश्य-ति एकवचनबहुवचनादिविवेकाभावेपाठशुद्धेरपिकर्तुमशक्यत्वात् वायुमेवस्वेनभागधेयेनोप-धावतिसएवैनंभूतिंगमयति । आदित्यानेवस्वेनभागधेयेनोपधावति तएवैनंभूतिंगमयन्तीत्यादाव-व्युत्पन्नःकथंपाठंनिश्चिनुयात् अन्यःकश्चिदर्थज्ञानायव्याकरणाद्यङ्गानिशृण्वन्नपिमीमांसाराहि-त्यादेनांवेदरूपांवाचंनसम्यक्शृणोति यावतोश्वान्प्रतिगृह्णीयात्तावतोवारुणांश्चतुष्कपालान्निर्व-पेदिति । अत्रव्याकरणमात्रेणप्रतिग्रहीतुरिष्टिःप्रतीयते मीमांसायांतुन्यायेनदातुरितिनिर्णीतम्। तस्मादुभयविधमप्यविद्वांसंमत्यैवमाहेति । तृतीयपादतात्पर्यंदर्शयति—अप्येकस्मैतन्वंविसस्र इ-तिस्वमात्मानंविवृणुतेज्ञानंप्रकाशनमर्थस्याहालययावाचाईति । अस्यायमर्थः—अपिशब्दपर्या-यउतोशब्दः सचपूर्वोक्तानभिज्ञवैलक्षण्यापात्रप्रयुक्तः निपातानामनेकार्थत्वात् यःपुमान्व्याक-रणाद्यङ्गैःस्वशब्दार्थमीमांसयातात्पर्यंचशोधयितुंप्रवृत्तस्तस्माएकस्मैवेदःस्वकीयांतनुंविसस्रेस्व-मित्यादिकंपदव्याख्यानंज्ञानमित्यादिकंतात्पर्यव्याख्यानम् वेदार्थप्रकाशनक्षमंसम्यग्ज्ञान-मनयातृतीयपादरूपयावाचामघआहेति । चतुर्थपादतात्पर्यंदर्शयति—उपमोत्तमयावाचा-जायेवपत्येकामयमानाऋतुकालेषुसुवासाःकल्याणवासाःकामयमानाऋतुकालेषुयथास-एनांपश्यतिसशृणोतीत्यर्थज्ञप्रशंसेति । अस्यायमर्थः—उत्तमयाचतुर्थपादरूपयावाचातृतीयपा-दार्थस्योपमोच्यते उशतीत्येतस्यव्याख्यानंकामयमानेति यद्यप्यङ्गिगृहकृत्यवेलायांमलिनवासा-स्तथापिसंभोगकालेषुकल्याणवासाभवति तत्रहेतुः कामयमानाऋतुकालेष्विति यथासपतिरे-नांजायांसाकल्येनादरयुक्तःपश्यति किञ्च तयोक्तमर्थंहितयुक्त्याशृणोति तथाऽयंचतुर्दशविद्या-

---

१ ऋ. स. ८. २ २३ । २ नि० १. १९ । ३ तै. स २. १. १. १ ४ तै० स. २. ३. १२.। ५ तै सं. २. ३ १२। ६ नि० १. १९. । ७ नि० १. १९ ।

स्थानपरिशीलनोपेतःपुरुषोवेदार्थरहस्यंसम्यक्पश्यति वेदोक्तंचधर्मब्रह्मरूपमर्थंहितबुद्ध्यास्वीकरोति सेयमुक्तावेदार्थाभिज्ञस्यप्रशंसेति पुनरप्यृगन्तरंयास्कउदाजहार–तस्योत्तराभूयसेनिर्वचनाय–उतत्वंसख्येस्थिरपीतमाहुर्नैनंहिन्वंत्यपिवाजिनेषु । अधेन्वाचरतिमाययैषवाचंशुश्रुवाँअफलामपुष्पामिति॑ । अयमर्थःपूर्वोदाहृतायाउतत्वःपश्यन्नित्यादिकायाऋचोऽनन्तरमेषाम्नाताकाचिदृक्तस्यपूर्वोक्तमन्त्रस्यार्थस्यभूयसेनिर्वचनायसम्पद्यते तमर्थमतिशयेनप्रतिपादयितुंप्रभवति कथमितिचेत्तदुच्यते–अपिचैकंचतुर्दशविद्यास्थानकुशलंपुरुषंवेदरूपायावाचः सख्येस्थित्वास्थैर्येणवेदोक्तार्थामृतपानयुक्तमाहुःअभिज्ञाःकथयन्ति सखिविदंसखायमितिमन्त्रे वेदस्यसखित्वमुदाहृतम् यद्वा स्वर्गलोकेवेदानांसख्येस्थित्वाअतिशयेनपीतामृतमाहुः वाचामिनाईश्वराः सभासुप्रगल्भावावाजिनाः तेषुमध्येप्येनंवेदार्थकुशलंचोदयितुंनहिन्वन्ति नकेपिप्रभवन्ति तेनसहविवदितुमसमर्थत्वात् यस्त्वन्यःपाठमात्रपरःपुष्पफलरहितांवाचंशुश्रुवान्भवति पूर्वकाण्डोक्तस्यधर्मस्यज्ञानंपुष्पम् उत्तरकाण्डोक्तस्यब्रह्मणोज्ञानंफलम् यथालोकेपुष्पंफलस्योत्पादकं तथावेदानुवचनादिधर्मज्ञानमनुष्ठानद्वाराफलात्मकब्रह्मज्ञानेच्छांजनयति तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्तियज्ञेनदानेनतपसानाशकेनेतिश्रुतेः । यथाचफलंतृप्तिहेतुस्तथाब्रह्मज्ञानंकृतकृत्यत्वहेतुः यत्पूर्णानन्दैकबोधः तद्ब्रह्माहमस्मीतिकृतकृत्योभवतीतिश्रुतेः । तादृशपुष्पफलरहितवेदपाठकःसएषपुमानधेन्वामाययासहचरति नवप्रसूतिकाक्षीरस्यदोग्ध्रीगौःप्रीतिहेतुत्वाद्धिनोतीतिव्युत्पत्त्याधेनुरित्युच्यते पाठमात्रपरंप्रतिवेदरूपावाक्धर्मब्रह्मज्ञानरूपंक्षीरंनदोग्धीत्यधेनुः अतएवासौमायाकपटरूपाऐन्द्रजालिकनिर्मितगोसदृशगोरूपत्वात् तयामाययासहचरन्नयंपरमपुरुषार्थंनलभतइत्यर्थः । इत्थंयास्केनज्ञानस्तुत्यज्ञाननिन्दोदाहरणस्यप्रपञ्चितत्वात् यच्चस्तूयतेतद्विधीयतइतिन्यायेनाध्ययनवदर्थज्ञानस्यापिविधिरभ्युपगन्तव्यः । किञ्चनक्षत्रेष्टिकाण्डेप्रतीष्टिफलवाक्यंयागतद्वेदनयो समानमेवाम्नायते–यथाहवाअग्निर्देवानामन्नादः एवंहवाएषमनुष्याणांभवति यएतेनहविषायजते यउचैनदेववेदेति । अतोयागवत्फलाय स्ववेदनमपिविधीयते अनेनन्यायेनसर्वेष्वपिब्राह्मणेषुवेदनविधयोद्रष्टव्याः । ननुविद्याप्रशंसेति सूत्रेवेदनफलानांप्रशंसारूपत्वंजैमिनिनासूत्रितमितिचेत् अस्तुनाम विद्यमानेनापिफलेनप्रशंसितुं शक्यत्वात् दर्शयागस्यपूर्णमासयागस्यचातिपातेसतिप्रायश्चित्तरूपांवैश्वानरोष्टिंविधातुंविद्यमानेनैवस्वर्गफलेनस्तुतिःक्रियते–सुवर्गायहिलोकायदर्शपूर्णमासाविज्येतेइति । एतच्चाचार्यैर्ब्रह्मज्ञानफलवाक्यस्यस्वार्थेऽपितात्पर्यंदर्शयितुमुदाहृतम्–इच्छाम्येवार्थवादत्वंवचसोन्यपरत्वतः । य-

१ ऋ० स ८ २ २३ । २ ऋ स ८ २ २४ । ३ तै० ब्रा० ३. १. ४ । ४ तै स २ २ ५ ।

थावस्त्वभिधायित्वानत्वभूतार्थवादता १ इज्येतेस्वर्गलोकायदर्शादर्शौयथातथा । नत्वभूतार्थवादत्वंपापश्लोकाश्रुतिर्यथेति २ नचवेदनमात्रेणफलसिद्धावनुष्ठानवैयर्थ्यमितिशङ्कनीयम्. फलभूयस्त्वेनपरिहृतत्वात्. उदाहृतंचात्रजैमिनिसूत्रम्—फलस्यकर्मनिष्पत्तेस्तेषांलोकवत्परिमाणतः सारतोवाफलविशेषःस्यादिति एतच्चास्माभिः तरतिब्रह्महत्यांयोऽश्वमेधेनयजते यउचैनमेवंवेदेत्युदाहरणेनव्याख्यातम् । छन्दोगाश्चकेवलादनुष्ठानाद्विद्यासहितेनुष्ठानेफलातिशयमामनन्ति-तेनोभौकुरुतोयश्चैतदेवंवेदयश्चनवेदनानातुविद्याचाविद्याचयदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीति । यद्यप्यङ्गावबद्धोपास्तिरत्रविद्याशब्देनविवक्षिता तथापिन्यायःसर्वास्वपिविद्यासुसमानः।कुतस्तर्वैतावतीवेदनेभक्तिरितिचेत्. कुतोवातवैषोऽत्रप्रद्वेषः।प्रशंसातावदस्माभिर्भूयसीदर्शिता निन्दांतुनक्वाप्युपलभामहे किन्तुकर्मजन्यमपूर्वंयथामरणादूर्ध्वंजीवेनसहगच्छति तथाविद्याजन्यमप्यपूर्वंगच्छति तथाचवाजसनेयिनआमनन्ति—तंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाचेति तस्मादध्ययनवदर्थज्ञानस्यापिविहितत्वात्. अर्थज्ञानायवेदोव्याख्यातव्यः विषयप्रयोजनसम्बन्धाधिकारिज्ञानमन्तरेणश्रोतृप्रवृत्त्यभावात् विषयादयोनिरूप्यन्ते—व्याख्यानस्यव्याख्येयोवेदोविषयः तदर्थज्ञानंप्रयोजनम् व्याख्यानव्याख्येयभावःसम्बन्धः ज्ञानार्थी चाधिकारी । यद्यप्येतावत्प्रसिद्धम् तथापिवेदस्यविषयाद्यभावेव्याख्यानस्यापिपरमविषयादिकंनस्यात्. अतोवेदस्यचतुष्टयमुच्यते—वेदेपूर्वोत्तरकाण्डयोःक्रमेणधर्मब्रह्मणीविषयः तयोरनन्यलभ्यत्वात् तथाचपुरुषार्थानुशासनेसूत्रितम्—धर्मब्रह्मणीवेदैकवेद्येइति । जैमिनीयेचद्वितीयसूत्रेचोदनैवधर्मेप्रमाणम् चोदनाप्रमाणमेवेतिनियमद्वयंसंप्रदायविद्भिरभिहितम्. चोदनैवेत्यमुमर्थमुपपादयितुंचतुर्थसूत्रेप्रत्यक्षविषयत्वंधर्मस्यनिराकृतम्. प्रत्यक्षमनिमित्तंविद्यमानोपलम्भनत्वादिति अनुष्ठानादूर्ध्वमुत्पत्स्यमानस्यधर्मस्यपूर्वमविद्यमानत्वात् नप्रत्यक्षयोग्यतास्ति उत्तरकालेऽपिरूपादिराहित्यान्नेन्द्रियैरवगम्यते अतएवादृष्टमितिसर्वैरभिधीयते लिङ्गराहित्यान्नानुमानविषयत्वमप्यस्ति सुखदुःखेधर्माधर्मयोर्लिङ्गमितिचेत् बाढम् अयमपिलिङ्गलिङ्गिभावोवेदेनैवगम्यते ततश्चोदनैवधर्मेप्रमाणम्. वैयासिकस्यतृतीयसूत्रस्यद्वितीयवर्णकेब्रह्मणःसिद्धवस्तुनोऽपिशास्त्रैकविषयत्वंभाष्यकृद्भिर्व्याख्यातम्—शास्त्रादेवप्रमाणाज्जगतोजन्मादिकारणंब्रह्माधिगम्यतइत्यभिप्रायइति । श्रुतिश्चभवति—नावेदविन्मनुतेतंबृहन्तमिति । तत्रोपपत्तिःपूर्वाचार्यैरेवमुदीरिता रूपलिङ्गादिराहित्यान्नास्यमानान्तरयोग्यतेति तस्मादनन्यलभ्यत्वात् अस्तिधर्मब्रह्मणोर्वेदविषयत्वम्. तदुभयज्ञानंवेदस्यसाक्षात्प्रयोजनम्. नचतस्यज्ञानस्यसप्तद्वीपावसुमतीराजासौगच्छतीत्यादिज्ञानवदपुरुषार्थपर्यवसायित्वंशङ्कनीयम्. धर्मप्रयुक्तस्यपुरुषार्थस्य

१ तै०सं ५.३.१२ । २ तै० ब्रा० ३ १२ ९ ।

स्तूयमानत्वात् धर्मोविश्वस्यजगतःप्रतिष्ठालोकेधर्मिष्ठंप्रजाउपसर्पन्ति धर्मेणपापमपनुदतिधर्मे सर्वंप्रतिष्ठितम् तस्माद्धर्मंपरमंवदन्तीति उद्दण्डस्यराज्ञोनियामकत्वात् विवदमानयोःपुरुषयोर्मध्येदुर्बलस्यापिराजसाह्राय्यवज्जयहेतुत्वाच्चधर्मःपुरुषार्थः तथाचवाजसनेयिनःसृष्टिप्रकरणे समामनन्ति—तच्छ्रेयोरूपमत्यसृजतधर्मंतदेतत्क्षत्रस्यक्षत्रंयद्धर्मस्तस्माद्धर्मात्परंनास्त्यथोअबलीयान्बलीयांसमाशंसते धर्मेणयथैवराज्ञैवमिति । ब्रह्मविदाप्नोतिपरं । ब्रह्मवेदब्रह्मैवभवति । तरतिशोकमात्मविदित्यादिश्रुतिप्रब्रह्मज्ञानमप्युक्तःपुरुषार्थःप्रसिद्धः तदुभयज्ञानार्थीवेदेऽधिकारी सचत्रैवर्णिकःपुरुषः। स्त्रीशूद्रयोस्तुसत्यामपिज्ञानापेक्षायामुपनयनाभावेनाध्ययनराहित्यात् वेदेधिकारःप्रतिषिद्धः धर्मब्रह्मज्ञानंतुपुराणादिमुखेनोत्पद्यते तस्मात्रैवर्णिकपुरुषाणांवेदमुखेनार्थज्ञानेऽधिकारः । सम्बन्धस्तुवेदस्यधर्मब्रह्मभ्यांसहप्रतिपाद्यप्रतिपादकभावः तदीयज्ञानेनसहजन्यजनकभावः त्रैवर्णिकपुरुषैःसहोपकार्योपकारकभावः । तदेवंविषयाद्यनुबन्धचतुष्टयमवगत्यसमाहितधियःश्रोतारोवेदव्याख्यानेप्रवर्तन्ताम् ॥ अतिगम्भीरस्यवेदस्यार्थमवबोधयितुंशिक्षादीनि षडङ्गानिप्रवृत्तानि अतएवतेषामपरविद्यारूपत्वंमुण्डकोपनिषद्याथर्वणिकाआमनन्ति—द्वेविद्येवेदितव्येइतिहस्मयद्ब्रह्मविदोवदन्तिपराचैवापराच तत्रापराऋग्वेदोयजुर्वेदःसामवेदोथर्ववेदःशिक्षाकल्पोव्याकरणंनिरुक्तंछन्दोज्योतिषमिति । अथपरा ययातदक्षरमधिगम्यतइति साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गसहितानांकर्मकाण्डानामपरविद्यात्वम्। परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वात् उपनिषदांपरविद्यात्वम् वर्णस्वराद्युच्चारणप्रकारोयत्रोपदिश्यतेसाशिक्षा । तथाचतैत्तिरीयाउपनिषदारम्भेसमामनन्ति—शीक्षांव्याख्यास्यामः वर्णःस्वरः मात्राबलं सामसन्तानः इत्युक्तःशीक्षाध्यायइति । वर्णोऽकारादिः सचाङ्गभूतशिक्षाग्रन्थेस्पष्टमुदीरितः । त्रिषष्टिश्चतुःषष्टिर्वावर्णाःसंभवतोमताः । प्राकृतेसंस्कृतेचापिस्वयंप्रोक्ताःस्वयंभुवेत्यादिना। स्वरउदात्तादिः सोऽपितत्रोक्तः—उदात्तश्चानुदात्तश्चस्वरितश्चस्वरास्त्रयइति । मात्राह्रस्वादिःसापितत्रोक्ता—ह्रस्वोदीर्घःप्लुतइतिकालतोनियमाअचीति । बलंस्थानप्रयत्नौ तत्रअष्टौस्थानानिवर्णानामित्यादिनास्थानमुक्तम्। अचोऽस्पृष्टायणस्त्वीषदित्यादिनाप्रयत्नउक्तः। सामशब्देनसाम्यमुक्तम् अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येनमाधुर्यादिगुणयुक्तत्वेनोच्चारणंसाम्यम् गीतीशीघ्रीशिरःकम्पीत्यादिना उपांशुदष्टंत्वरितमित्यादिनाचदोषाउक्ताः । माधुर्यमक्षरव्यक्तिरित्यादिनागुणाउक्ताः । सन्तानःसंहिता वायवायाहीत्यत्रावादेशः । इन्द्राग्नीआगतमित्यत्रप्रकृतिभावः । एतच्चव्याकरणे

१ तै० आ० दशमप्रपाठके. । २ तै आ० अष्टमप्रपाठके । ३ तै० आ० सप्तमप्रपाठके. । ४ 'शुभमतेमता., अयमेवप्रचुर पाठः । ५ ऋ सं० १. १. ३. । ६ ऋ० सं० ३. १. १०. ।

ऽभिहितत्वात् शिक्षायामुपेक्षितम् शिक्ष्यमाणवर्णादिविकल्पेबाधस्तत्रोदाहृतः—मन्त्रोहीनः स्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह । सवाग्वज्रोयजमानंहिनस्तियथेन्द्रशत्रुःस्वरतोऽपराधादिति । इन्द्रशत्रुर्वर्धस्वेत्यस्मिन्मन्त्रेइन्द्रस्यशत्रुर्घातकइत्यस्मिन्विवक्षितेऽर्थेतत्पुरुषसमासेसमासस्येतिसूत्रेणतत्पुरुषत्वात् अन्तोदात्तेनभवितव्यम् आद्युदात्तस्तुप्रयुक्तः तथासति पूर्वपदप्रकृतिस्वरत्वेनबहुव्रीहित्वात् इन्द्रोघातकोयस्येत्यर्थःसम्पन्नः तस्मात्स्वरवर्णाद्यपराधपरिहारायशिक्षाग्रन्थोपेक्षितः । कल्पस्त्वाश्वलायनापस्तम्बबौधायनादिसूत्रम् कल्प्यतेसमर्थ्यतेयागप्रयोगोऽत्रेतिव्युत्पत्तेः नन्वाश्वलायनः किंमन्त्रकाण्डमनुसृत्यप्रवृत्तःकिंवाब्राह्मणमनुसृत्य । नाद्यः दर्शपूर्णमासौतुपूर्वंव्याख्यास्यामइत्येवंतेनोपक्रान्तत्वात् नह्यग्निमीळइत्यादयोमन्त्रादर्शपूर्णमासयोःक्वचिद्विनियुक्ताः । नद्वितीयः आग्नावैष्णवमेकादशकपालंपुरोडाशंनिर्वपन्तिदीक्षणीयायामित्येवंदीक्षणीयेष्टेर्ब्राह्मणेप्रक्रान्तत्वात् । अत्रोच्यते—मन्त्रकाण्डोब्रह्मयज्ञादिजपक्रमेणप्रवृत्तोनतुयागानुष्ठानक्रमेण ब्रह्मयज्ञश्चैवंविहितः यत्स्वाध्यायमधीयीतैकामप्यृचं यजुःसामवातद्ब्रह्मयज्ञइति सोयंब्रह्मयज्ञजपोग्निमीळइत्याम्नायक्रमेणैवानुष्ठेयः तथासर्वाऋचःसर्वाणियजूंषिसर्वाणिसामानिवाचस्तोमेपारिप्लवंशंसतीतिविधीयन्ते तथाश्विनेसंपत्स्यमानेसूर्योनोदियादपिसर्वादाशतयीरनुब्रूयादितिविधीयते तथारिच्यतइववाएषप्रेवरिच्यते योयाजयतिप्रतिवागृह्णाति याजयित्वाप्रतिगृह्यवानश्नन्त्रिःस्वाध्यायंवेदमधीयीतेतिप्रायश्चित्तरूपं वेदपारायणंविहितम् । इत्यादिषुकृत्स्नमन्त्रकाण्डविनियोगेषुसम्प्रदायपारम्पर्यागतएवक्रमआदरणीयः । विशेषविनियोगस्तुमन्त्रविशेषाणांश्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्याश्वलायनोदर्शयति अतोमन्त्रकाण्डक्रमाभावेऽपिनकश्चिद्विरोधः । इषेत्वोर्जेत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाताइत्यापस्तम्बादयस्तेनैवक्रमेणसूत्रनिर्माणेप्रवृत्ताः । आम्नातत्वादेवजपादिष्वपिसएवक्रमः । यद्यपिब्राह्मणेदीक्षणीयेष्टिरुपक्रान्ता तथापितस्याइष्टेर्दर्शपूर्णमासविकृतित्वेनतदपेक्षत्वात् आश्वलायनस्यादौतद्व्याख्यानंयुक्तम् अतः कल्पसूत्रंमन्त्रविनियोगेनक्रत्वनुष्ठानमुपदिश्योपकरोति तर्हि प्रवोवाँजाइत्यादीनांसामिधेनीनामृचामेवविनियोगमाश्वलायनोब्रवीतु नमःप्रवक्त्रइत्यादयस्त्वनाम्नाताःकुतोविनियुज्यन्तेइतिचेत् नायंदोषः शाखान्तरसमाम्नातानांब्राह्मणान्तरसिद्धस्यविनियोगस्यचगुणोपसंहारन्यायेनात्रवक्तव्यत्वात् सर्वशाखाप्रत्ययमेकंकर्मेतिन्यायविदः तस्माच्छिक्षेवकल्पोपेक्षितः । व्याकरणमपिप्रकृतिप्रत्ययाद्युपदेशेनपदस्वरूपतदर्थनिश्चयायोपयुज्यते तथाचैन्द्रवायवग्रहब्राह्मणेसमाम्नायते—वाग्वैपराच्यव्या-

१ ऐ० ब्रा० १. १. । २ तै. आ० द्वितीयप्रपाठके । ३ तै० आ० द्वितीयप्रपाठके. । ४ ऋ. सं. २. १. २८. । ५. समाम्नातस्येत्यपिपाठः । ६ तै. सं. ६. ४. ७. ।

ग्योगविदुष्यति चापशब्दैः । कः वाग्योगविदेव योहिशब्दाञ्जानातिअपशब्दानप्यसौजानाति यथैवशब्दज्ञानेधर्मएवमपशब्दज्ञानेऽप्यधर्मःप्राप्नोति अथवाभूयानधर्मःप्राप्नोति भूयांसोह्यपशब्दाअल्पीयांसःशब्दाएकैकस्यहिशब्दस्यबहवोपभ्रंशायथागौरित्येतस्यशब्दस्यगावीगोणीगोपोतलिकेत्येवमादयः । अथयःअवाग्योगवित् अज्ञानंतस्यशरणम्. विषमउपन्यासः नात्यन्ताज्ञानंशरणंभवितुमर्हति योह्यजानन्ब्राह्मणंहन्यात् सुरांवापिबेत् सोऽपिमन्येपतितःस्यात् एवंतर्हिकः अवाग्योगविदेव अथयः वाग्योगवित् ज्ञानंतस्यशरणं । अविद्वांसः अविद्वांसःप्रत्यभिवादेनाम्नोयेनप्लुतिंविदुः । कामंतेषुतुविप्रोष्यस्त्रीष्विवायमहंवदेदिति । स्त्रीवन्माभूमेत्यध्येयंव्याकरणं विभक्तिंकुर्वन्ति याज्ञिकाःपठन्ति प्रयाजाःसविभक्तिकाःकर्तव्याइति नचान्तरेणव्याकरणं प्रयाजाः सविभक्तिकाः शक्याःकर्तुम्. तस्मादध्येयंव्याकरणम् । योवाइमां योवाइमांपदशःस्वरशोवर्णशोऽक्षरशोवावाचंविदधाति सआर्त्विजीनोभवति आर्त्विजीनाः स्यामेत्यध्येयंव्याकरणम् । चत्वारिशृङ्गा चत्वारिशृङ्गात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याआविवेश । चत्वारिशृङ्गा चत्वारिपदजातानि नामाख्यातोपसर्गनिपाताश्च त्रयोअस्यपादाः त्रयःकालाः द्वेशीर्षेसुप्तिङश्च सप्तहस्तासःसप्तविभक्तयः त्रिधाबद्धः त्रिषुस्थानेषुबद्धः उरसिकण्ठेशिरसि वृषभोवर्षणात्कामानांरोरवीति रौतिः शब्दकर्मा महोदेवोमर्त्याआविवेश महतादेवेननस्तात्सात्म्यंयथास्यादित्यध्येयंव्याकरणम् । अथवा चत्वारि चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः । गुहात्रीणिनिहितानेङ्गयन्तितुरीयंवाचोमनुष्यावदन्ति येमनीषिणः मनसईषिणोमनीषिणःगुहायांत्रीणिनिहितानिनेङ्गयन्ति नचेष्टन्ते ननिमिषन्तितुरीयंवाचोमनुष्यावदन्ति तुरीयंहवाएतद्वाचोयन्मनुष्येषुवर्तते । उतत्वः पश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनाम् । उतोत्वस्मैतन्वं१विसस्रेजायेवपत्यउशतीसुवासाः । अपित्वल्वेकःपश्यन्नपिनपश्यति शृण्वन्नपिनशृणोत्येनां विद्वांसमाहार्धंत्वस्मैअन्यस्मैतन्वं विसस्रेतनुंविवृणुते जायेवपत्यउशतीसुवासाःयथाजायापत्येकामयमानासुवासाःस्वमात्मानंविवृणुते एवंवाक्विदेस्वमात्मानंविवृणुते वाक्स्वंनोविवृणुयादित्यध्येयंव्याकरणम् । सक्तुमिवतितउनापुनन्तोयत्रधीरामनसावाचमक्रत । अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि सक्तुःसचतेर्दुर्धावोभवतिकसतेर्वास्याद्विपरीतस्यविकसितोभवति तितउपरिपवनंभवति ततवद्वातुन्नवद्वाधीराःप्रज्ञावन्तोध्यानवन्तोमनसाप्रज्ञानेनवाचमक्रत वाचमकृषत सख्यानिसंजानते कएवदुर्गमोमार्गः एकगम्योवाग्विषयः केपुनस्ते वैयाकरणाः कुतएतत् भद्रात्येषांलक्ष्मीर्निहि-

१ ऋ० सं. २-३. २२. । २ ऋ० सं. ८. २. २३. । ३ ऋ० सं०८. २. २३. ।

एतत्सूक्तं कृत्स्नमाग्नेयं हे विश्वेदेवाः यूयं मा मां शास्तन अनुज्ञां दत्त यथेह यज्ञे होता देवानामाह्वाता सन् वृतोहोतृत्वेन वृतोहं मनवै स्तौमि भवतः। यद्यस्मात् निषद्य स्तौमि तस्मात् शास्तन मे मम भागधेयं प्रब्रूत यथावोयूयं भागं कल्पितवंतः तथा तं भागं प्रब्रूत पथा वोहव्यं आवहानि वहनं करोमि ॥ १ ॥

अथ द्वितीया—

अ॒हंहोता॒न्य॑सीदं॒यजी॑या॒न्विश्वे॑दे॒वाम॒रुतो॑माजु॒नन्ति ।
अह॒रह॑रश्वि॒नाध्व॑र्य॒वंवां॒ब्र॒ह्मास॒मिद्भ॑व॒तिसाहु॑तिर्वाम् ॥ २ ॥

अ॒हम् । होता॑ । नि । अ॒सी॒द॒म् । यजी॑यान् । विश्वे॑ । दे॒वाः ।
म॒रुतः॑ । मा॒ । जु॒न॒न्ति॒ । अहः॑ऽअहः । अ॒श्वि॒ना॒ । आध्व॑र्यवम् ।
वा॒म् । ब्र॒ह्मा । स॒म्ऽइत् । भ॒व॒ति॒ । सा । आऽहु॑तिः । वा॒म् ॥ २ ॥

यजीयान् यष्टृतमोहं होता सन् न्यसीदं निषण्णोस्मि निषदने तं निषण्णं मा मां विश्वे व्याप्तामरुतोदेवाजुनन्ति प्रेरयन्ति हविर्वहनाय। हे अश्विना अश्विनौ वां युवयोराध्वर्यवं अहरहः प्रतिदिनं कर्तव्यमिति शेषः। आध्वर्यवं भवद्भ्यामनुज्ञातव्यमित्यर्थः। ब्रह्मा भवति भवतु कः समित् समिद्धश्चन्द्रमाः चन्द्रमा ब्रह्मा भवतु। किंच सासमोम इत्यर्थः सचा समित् समिद्धश्चन्द्रमाः यां युवयोर्होमार्थंवायुवाभ्या क्रियमाणायाध्वर्यवकर्मणे आहुतिर्भवति भवत्वित्यर्थः। सोमात्मकोहि चन्द्रमाहूयते। एषवैसोमराजेत्युपक्रम्य तदेवाभयन्तीति हिच्छन्दोगब्राह्मणं। अथवैवंयोजना या आहुतिराध्वर्यवमनुष्ठितवद्भ्यां होतव्या सां वां युवयोर्युवाभ्या भवति भवतु आध्वर्यवंवामित्यस्यैवविवरणमेतत् ॥ २ ॥

अथ तृतीया—

अ॒यंयोहो॒ता॒किरु॒सय॒मस्य॒कमप्यू॑हे॒यत्स॑म॒ञ्जन्ति॑दे॒वाः ।
अह॑रहर्जाय॒तेमा॒सिमा॒स्यथा॑दे॒वादधि॒रेह॒व्य॒वाह॑म् ॥ ३ ॥

अयम् । यः । होता । किः । ऊँ इति । सः । यमस्य । कम् ।
अपि । ऊहे । यत् । सम्ऽअञ्जन्ति । देवाः । अहःऽअहः । जायते ।
मासिऽमासि । अथ । देवाः । दधिरे । हव्यऽवाहम् ॥ ३ ॥

योयं होता सकिः कोभवति । कीदृशोभवति तस्य कोव्यापारइत्यर्थः तस्योत्तरमुच्यते यमस्य मृतेर्भीतः सन्निति शेषः कमपि हुतं ऊहे वहति यद्वा सर्वमृत्विग्जातं नियमयतीति यमोयजमानः तस्य कमपि हुतमूहे वहति देवान् प्रति यत्समञ्जन्ति मद्धविः प्राप्नुवंति देवाः । किंचाग्निरहरहः प्रतिदिनमग्निहोत्रार्थं जायते प्रादुर्भवति तथा मासिमासि प्रतिमासं जायते पितृयज्ञार्थं एतत्कालद्वयमुपलक्षणं पक्षचतुर्मासषण्माससंवत्सरादीनां । अपरेतु पुनरेवमाहुः अहरहः सूर्यात्मना जायते मासिमासि चन्द्रात्मनेति । अथ तमिममग्निं देवा दधिरे हव्यवाहं हविषां वोढारं एवमग्निः स्वात्मानं स्वयमेवोक्तवान् ॥ ३ ॥

अथ चतुर्थी—

मांदेवादधिरेहव्यवाहमपम्लुक्तंबहुकृच्छ्राचरन्तम् ।
अग्निर्विद्वान्यज्ञंनःकल्पयातिपञ्चयामंत्रिवृतंसप्ततन्तुम् ॥ ४ ॥

माम् । देवाः । दधिरे । हव्यऽवाहम् । अपऽम्लुक्तम् । बहु ।
कृच्छ्रा । चरन्तम् । अग्निः । विद्वान् । यज्ञम् । नः । कल्पयाति ।
पञ्चऽयामम् । त्रिऽवृतम् । सप्तऽतन्तुम् ॥ ४ ॥

मामग्निं देवाहव्यवाहं हविर्वोढारं दधिरे । कृतवंतः कीदृशं मां अपम्लुक्तं अपक्रम्यागतं बहुकृच्छ्रा बहूनि कृच्छ्राणि स्थानानि चरन्तं गच्छन्तं कया मनीषया दधिरे इत्युच्यते अयमग्निर्विद्वान् सर्वं जानन् नोस्माकं यज्ञं कल्पयाति कल्पयति । कीदृशं यज्ञं पंचयामं पंचविधगमनं पांक्तोहियज्ञः त्रिवृतं सवनत्रयभेदेन त्रिप्रकारं सप्ततन्तुं सप्तभिः छंदोमयैः स्तुतिभिर्विस्तृतं ॥ ४ ॥

अथ पंचमी–

आवोंयक्ष्यमृतत्वंसुवीरंयथावोदेवावरिवःकराणि ।
आबाह्वोर्वज्रमिन्द्रस्यधेयामथेमाविश्वाःपृतनाजयाति ॥ ५ ॥

आ । वः । यक्षि । अमृतऽत्वम् । सुऽवीरम् । यथा । वः । देवाः ।
वरिव. । कराणि । आ । बाह्वोः । वज्रम् । इन्द्रस्य । धेयाम् ।
अथ । इमाः । विश्वाः । पृतनाः । जयाति ॥ ५ ॥

हे देवावोयुष्मानायक्षि आयाचे किं अमृतत्वं अविनाशित्वं सुवीरं सुपुत्रं च हे देवा-वोयुष्माकं वरिवः परिचर्यां हवीरूपधनं वा यथा कराणि करवाणि तदर्थमित्यर्थः । किंचे-न्द्रस्य बाह्वोर्वज्रं आधेयां ग्राहयामीत्यर्थ. अग्नेर्होतृत्वाभावे इंद्रस्य सोमायभावाद्दुर्बलत्वेन व-ज्रधारणं नोपपद्यते अतस्तत्कृत्वा वज्रं ग्राहयामीत्यर्थः । अथैवं सतीमाविश्वाः सर्वाःपृतनाः शत्रुसेनाः जयाति जयति जयतु वा ॥ ५ ॥

अथ षष्ठी–

त्रीणिंशतात्रीसहस्राण्यग्निंत्रिंशच्चदेवानवचासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्माआदिद्धोतारंन्यसादयन्त ॥ ६॥१२॥

त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च ।
देवाः । नव । च । असपर्यन् । औक्षन् । घृतै. । अस्तृणन् ।
बर्हिः । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ॥ ६ ॥ १२ ॥

त्रीणि शता शतानि त्री सहस्रा त्रीणि सहस्राणि त्रिंशच्च नव च एतत्संख्याकादेवाअ-ग्निं मां सपर्यन् पर्यचरन् । परिचारप्रकारउच्यते–घृतैः क्षरद्भिराज्यैः औक्षन् सिक्तवंतः अस्मै अग्नये मह्यं च बर्हिरस्तृणन् आस्तृतवन्तः । आदित् आस्तरणानन्तरं होतारं आह्वातारं न्य-सादयन्त नियमेनासादितवन्तः ॥ ६ ॥

॥ इत्यष्टमस्य प्रथमे द्वादशोवर्गः ॥ १२ ॥

यमैच्छामेत्येकादशर्चमेकादशं सूक्तं देवानां वाक्यत्वाद्देवाऋषयः तदर्थेति द्वृचस्य सौचीकोग्निर्ऋषिः तन्तुंतन्वन्नित्याद्याः अष्टमीवर्जिताजगत्यः अष्टमीशिष्टाश्च त्रिष्टुभः। तथाचानुक्रान्तं—तंतुमाद्याजगत्योष्टमीवर्जमिति। शिष्टमुक्तं। गतःसूक्तविनियोगः।

तत्र प्रथमा—

यमैच्छाममनसासोऽयमागाद्यज्ञस्यंविद्वान्परुंपश्चिकित्वान्।
सनोयक्षद्देवतातायजीयान्निहिपत्सदन्तरःपूर्वोअस्मत्॥ १॥

यम्। ऐच्छाम। मनसा। सः। अयम्। आ। अगात्। यज्ञस्यं।
विद्वान्। परुंषः। चिकित्वान्। सः। नः। यक्षत्। देवऽतांता।
यजीयान्। नि। हि। सत्संत्। अन्तरः। पूर्वः। अस्मत्॥ १॥

यमग्निं ऐच्छाम अन्विष्टवन्तोवयं मनसा हविः प्रापणबुध्या मदं हविः प्रापयत्विति बुध्येत्यर्थः सोयमग्निरागात् आजगाम कीदृशोग्निः यज्ञस्य यज्ञं विद्वान् जानन् तथा परुषः परूंषि सन्धातव्यान्यंगानि चिकित्वान् अभिगच्छन् सोग्निर्यजीयान् यष्टृतमः नोस्मान्देवतावा देवतातौ यज्ञे यक्षत् यजतु निषत्सद्धि न्यसीदत् खलु वेद्यामितिशेषः। कीदृशः सन् अन्तरः ऋत्विजां यष्टव्यानां देवानां च मध्ये संचरन् अस्मत्पूर्वः अस्मत्तोदेवेभ्यः पूर्वभावी सन् अग्निं समिध्य पश्चाद्धि देवाआहूयंते॥ १॥

दर्शपूर्णमासयोः पुरा अराधीत्येषा जप्या। सूत्रमुदाहृतं।

सैषा द्वितीया—

अराधिहोतानिपदायजीयानभिप्रयांसिसुधितानिहिख्यत्।
यजामहैयज्ञियान्हन्तदेवाँईळामहाईड्याँआज्येन॥ २॥

अराधि। होता। निऽसदा। यजीयान्। अभि। प्रयांसि।
सुऽधितानि। हि। ख्यत्। यजामहै। यज्ञियान्। हन्त।
देवान्। ईळामहे। ईड्यान्। आज्येन॥ २॥

अयमग्निः होता होमनिष्पादकोयजीयान् यष्टृतमश्च सन् निषद्य येषां निषदनेन अ-
राधि सिद्धोभूत् आहुतियोग्योभूदित्यर्थः तथाभूतोयं सुधितानि सुष्ठुनिहितानि प्रयांसि चरु-
पुरोडाशाद्यन्नानि अभिहित्यैव अभिचष्टे सर्वतः पश्यति हीतिपूरणः कया बुद्ध्येति यज्ञियान्
यष्टव्यान् आहुतिभाजोदेवान् हन्त शीघ्रं आज्येन यजामहे इति तथा ईड्यांश्च स्तुतिभाजो-
देवान् स्तुत्याईळामहाइति बुद्ध्येतिशेषः ॥ २ ॥

यस्मिन्यजमाने जीवति सति मृतशब्दोजायते तस्य सुरभिमतीष्टिः कर्तव्या साध्वीमक-
रित्येषा तत्रयाज्या । सूत्रितंच—अग्निर्होतान्यसीदद्यजीयान् साध्वीमकर्देववीतिंनोअद्येति ।

सैषा तृतीया—

साध्वीमकर्देववीतिंनोअद्ययज्ञस्यजिह्वामविदामगुह्याम् ।
सआयुरागात्सुरभिर्वसानोभद्रामकर्देवहूतिंनोअद्य ॥ ३ ॥

साध्वीम् । अकः । देवऽवीतिम् । नः । अद्य । यज्ञस्य । जिह्वाम् ।
अविदाम । गुह्याम् । सः । आयुः । आ । अगात् । सुरभिः ।
वसानः । भद्राम् । अकः । देवऽहूतिम् । नः । अद्य ॥ ३ ॥

अयमग्निरद्य नोस्माकं देववीतिं देवानामागमनवन्तं देवानां हविर्भक्षणोपेतं वा यज्ञं सा-
ध्वीमकः साधुमकरोत् वयं च यज्ञस्य गुह्यां गूढतरां जिह्वां अविदाम लब्धवन्तः अग्निर्हि य-
ज्ञस्य जिह्वा तेन देवानां पानात् जिह्वात्वोपचारः । सतादृशोग्निः सुरभिः सुगन्धः आयुर्दे-
वैर्दत्तमायुष्यं वसानआच्छादयन् आगादागच्छति । आगत्य च नोस्मदर्थं देवहूतिं देवानामा-
ह्वानवन्तं यज्ञं भद्रामकः कल्याणं कृतवान् अद्येदानीं ॥ ३ ॥

दर्शपूर्णमासयोः सामिधेन्यर्थं प्रेषितेन होत्रा तदद्यवाचइत्येषा जप्या सुगादापनात्पूर्व-
मपि जप्या । सूत्रितंच—तदद्यवाचःप्रथमंमसीयेति समाप्येति ।

सैषा चतुर्थी—

तदद्यवाचःप्रथमंमसीययेनासुराँअभिदेवाअसाम ।
ऊर्जादउतयज्ञियासःपञ्चजनामममहोत्रंजुषध्वम् ॥ ४ ॥

तत् । अद्य । वाचः । प्रथमम् । मसीय । येन॑ । असु॑रान् ।
अभि । देवाः । असा॑म । ऊर्जऽअदः । उत । यज्ञियासः ।
पञ्च॑ । जनाः । मम॑ । होत्रम् । जुषध्वम् ॥ ४ ॥

इदमुत्तरं चाग्नेर्वाक्यमित्युक्तं अथेदानीं प्रथमं मुख्यनामैतत् वाचां मुख्यं तद्वाचोवचो ? चनं मसीय उच्चारयामि येन वचसा अहं देवाश्च वयं असुरानभ्यसाम अभिभवेम किं तत् प्रथमं वचनमित्युच्यते हे ऊर्जादः अन्नादः उतापिच यज्ञियासः यज्ञार्हाः हे पंचजनाः देवमनुष्यादयः यूयं मम होत्रं हवमाह्वानं जुषध्वं सेवध्वमिति एवंवहूच्यमाने अग्निमनूयन्ति सर्वेदेवाइत्यभिप्रायः । अत्र तदद्यवाचःपरमंमसीयेत्यादिकं निरुक्तं द्रष्टव्यं ॥ ४ ॥

अथ पंचमी—

पञ्चजनाममहोत्रंजुषन्तांगोजाताउतयेयज्ञियासः ।
पृथिवीनःपार्थिवात्पात्वंहसोन्तरिक्षंदिव्यात्पात्वस्मान् ॥५॥१३॥

पञ्च॑ । जना॑ः । मम॑ । होत्रम् । जुषन्ताम् । गोऽजा॑ताः । उत ।
ये । यज्ञिया॑सः । पृथिवी । नः । पार्थिवात् । पातु । अंह॑सः ।
अन्तरि॑क्षम् । दिव्यात् । पातु । अस्मान् ॥ ५ ॥ १३ ॥

पंचजनादेवादयः मम होत्रं हवमाह्वानं जुषन्तां सेवन्तां । अपिच गोजाताः भूम्यामुत्पन्नाः यद्वा गोशब्देन तज्जं पयआदिकमुच्यते हविरर्थं प्रादुर्भूताइत्यर्थः । तादृशाये सन्ति उतापिच येयज्ञियासोयज्ञार्हादेवाः सन्ति ते मम होत्रं जुषन्तां । किंच पृथिवी देवता पार्थिवात् पृथिवीसंबन्धात् नोस्मान् अंहसः पापात्पातु रक्षतु । तथा अन्तरिक्षं अन्तरिक्षदेवता दिव्यात् आन्तरिक्ष्यात् अंहसः पापात् सकाशात् अस्मान्पातु ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे त्रयोदशोवर्गः ॥ १३ ॥

गार्हपत्यादारभ्य आहवनीयाद्वेदिं वेदतृणैरास्तृणाति तन्तुमित्यनया । सूत्रितंच—अविच्छिन्नमन्ततस्तृणन्त्सव्येन गार्हपत्यादाहवनीयमेति तन्तुंतन्वन्रजसोभानुमन्विहीति । अग्नि-

[1] नि० ३.८ ।

होत्रहोमेष्वनया उदकधारास्रावणीया । सूत्रितंच—गार्हपत्यादविच्छिनामुदकधारां हरेत्तन्तुं तन्वन्नजसोभानुमन्विहीति । अग्न्यन्तराले श्वातिक्रमणे अनया गार्हपत्याहवनीययोर्मध्यं उदकेन भस्मना च पूरयेत् । सूत्रितंच—गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्याच सन्तनुयादिति । आग्निमारुतेप्येषा धाय्या । सूत्रितंच—तन्तुंतन्वन्नजसोभानुमन्विह्येवानइन्द्रोमघवाविरप्शीति ।

अथ षष्ठी—

तन्तुंतन्वन्नजसोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् ।
अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनम् ॥ ६ ॥

तन्तुम् । तन्वन् । रजसः । भानुम् । अनु । इहि । ज्योतिष्मतः ।
पथः । रक्ष । धिया । कृतान् । अनुल्बणम् । वयत । जोगुवाम् ।
अपः । मनुः । भव । जनय । दैव्यम् । जनम् ॥ ६ ॥

हे अग्ने तन्तुं यज्ञं तन्वन् विस्तारयन् रजसः रञ्जनात्मकस्य लोकस्य भानुं भासकमादित्यं अन्विहि अनुगच्छ रश्मिद्वारा सूर्यमण्डलं प्रविशेत्यर्थः किंच ज्योतिष्मतः प्रकाशवतोयज्ञस्य पथोगमनमार्गान् अथवा ज्योतिष्मतोदीप्तिमतः स्वर्गस्य पथोमार्गान् देवयानान् रक्ष पालय । कीदृशान् मार्गान् धिया कर्मणा कृतान् संपादितान् । किंच सोमि जोगुवा स्तोतॄणा अपः कर्मनामैतत् क्रियया व्याप्यं कर्म अनुल्बणं अनतिरिक्तं वयत करोतु । देवयज्ञउल्बणं क्रियते तस्यैवैषा शान्तिरिति हिन्नालंणं । सत्वं मनुर्भव मन्तव्योभव स्तुत्योभवेत्यर्थः किंच दैव्यं जनं देवसंघं जनय उत्पादय यज्ञाभिगमनवन्तं कुर्वित्यर्थः ॥ ६ ॥

अथ सप्तमी—

अक्षानहोनह्यतनोतसोम्याइष्कृणुध्वंरशनाओतपिंशत ।
अष्टावन्धुरंवहताभितोरथंयेनदेवासोअनयन्नभिप्रियम् ॥ ७ ॥

---

१ तै० सं० ७ ४ ५ ।

अक्षऽनहः । नह्यतन । उत । सोम्याः । इष्कृणुध्वम् । रशनाः ।
आ । उत । पिंशत । अष्टाऽवन्धुरम् । वहत । अभितः । रथम् ।
येन । देवासः । अनयन् । अभि । प्रियम् ॥ ७ ॥

अत्र यज्ञे जिगमिषवोदेवाः परस्परं ब्रुवते हे सोम्याः सोमार्हादेवाः यूयं अक्षानहः अक्षेषु नह्यान् बन्धनीयान् अश्वान् नह्यतन नह्यत बध्नीत रथे । उतापिच रशनाः अश्वबन्धनप्रग्रहान् इष्कृणुध्वं निष्कुरुत सम्यक् संस्कुरुत नकारलोपश्छान्दसः । उतापिच आपिंशत पिशअवयवे अश्वानलंकुरुतेत्यर्थः । अष्टावन्धुरं वन्धुरं सारथिनिवासस्थानं अष्टसंख्याकवंधुरोपेतं रथं सूर्यसंबन्धिनं अभितः सर्वतोवहत सूर्यरथेन साकं युष्मदीयान् रथान् यज्ञं प्रतिगमयतेत्यर्थः येन देवासोदेवाः प्रियं आत्मानं अनयन् अभिगमयन्ति तं रथमभितोवहतेति संबन्धः । यद्वा तं यज्ञं प्रति वहतेति योज्यं ॥ ७ ॥

वैवाहिके प्रयाणे यदि नावा तार्या नदी स्यात् तदानीमश्मन्वतीत्यर्धर्चेन वधूं नावमारोहयेत् उत्तरेणार्धर्चेन नदीमुत्क्रामयेत् । सूत्रितंच—अश्मन्वतीरीयतेसंरभध्वमित्यर्धर्चेन नावमारोहयेदुत्तरेणोत्क्रमयेदिति ।

सैषा अष्टमी—

अश्मन्वतीरीयतेसंरभध्वमुत्तिष्ठतप्रतरतासखायः ।
अत्राजहामयेअसन्नशेवाःशिवान्वयमुत्तरेमाभिवाजान् ॥ ८ ॥

अश्मन्ऽवती । रीयते । सम् । रभध्वम् । उत् । तिष्ठत । प्र ।
तरत । सखायः । अत्र । जहाम । ये । असन् । अशेवाः ।
शिवान् । वयम् । उत् । तरेम । अभि । वाजान् ॥ ८ ॥

अनयापि देवायज्ञजिगमिषवः परस्परं ब्रुवते अश्मन्वती नाम नदी रीयते गच्छति री गतिरेषणयोः तां यज्ञगमनायोत्तरीतुं उत्तिष्ठत उद्गच्छत तथाकृत्वा प्रतरत तां नदीमुलंघयत हे सखायोयजमानस्य सखिभूताइतिदेवानां संबोधनं अत्र अस्यां नद्यां जहाम परित्यजाम का-

निति उच्यते ये अशेवाः शेवमिति सुखनाम ये असुखभूताः असन्नभूवन् अस्मानाश्रित्यव-
र्तन्ते तान्जहाम । तथाकृत्वा शिवान् सुखकरान् वाजान् अन्नानि हवींषि अभि प्राप्नुमुत्तरेम
उत्तीर्णाभवेम वयं ॥ ८ ॥

अथ नवमी—

त्वष्टांमायावेंदुपसांमुपस्तंमोविभ्रत्पात्रादेवपानांनिशंतंमा ।
शिशींतेनूनंपंरशुंस्वांयसंयेनंवृश्चादेतंशोब्रह्मंणस्पतिः ॥ ९ ॥

त्वष्टा । मायाः । वेत् । अपसाम् । अपःऽतंमः । विभ्रत् । पात्रां ।
देवऽपानांनि । शम्ऽतंमा । शिशीते । नूनम् । परशुम् । सुऽआयसम् ।
येनं । वृश्चात् । एतंशः । ब्रह्मंणः । पतिः ॥ ९ ॥

अयं त्वष्टा देवशिल्पी मायाः कर्मनामैतत् कर्माणि पात्रनिर्माणविषयाणि वेत् वेत्ति जानाति सच त्वष्टा अपसां शोभनकर्मवतां मध्ये अपस्तमः अतिशयेन शोभनकर्मा देवपानानि देवाः पिबन्ति येषु तानि पात्रा सोमपात्राणि विभ्रत् धारयन् वर्तते इति शेषः सत्वष्टा नूनमिदानीं अग्नौ हविर्वहनायांगीकृते सति स्वायसं शोभनायःसारभूतं परशुं शिशीते तीक्ष्णयति त्वष्टा पात्रसंपादनार्थं येन परशुना एतशः एतवर्णः ब्रह्मणस्पतिः ब्रह्मणोमंत्रस्य पात्रादिसंपादनरूपस्य कर्मणः पतिः स्वामी वृश्चात् वृश्चति पात्राणि ॥ ९ ॥

अथ दशमी—

सतोनूनंकंवयःसंशिशीतवाशींभिर्याभिंरमृतायतक्षंथ ।
विद्वांसंःपदागुह्यांनिकर्तनयेनंदेवासोअमृतत्वमांनशुः ॥ १० ॥

सतः । नूनम् । कवयः । सम् । शिशीत । वाशींभिः । याभिः ।
अमृताय । तक्षंथ । विद्वांसः । पदा । गुह्यांनि । कर्तन । येनं ।
देवासः । अमृतऽत्वम् । आनशुः ॥ १० ॥

हे कवयोमेधाविनः त्वष्टुर्मम शिष्याः ऋभवः सतः सन्तइत्यर्थः प्रशस्तायूयं नूनमिदानीं संशिशीत अत्यर्थं तीक्ष्णीकुरुत वाशीः याभिर्वाशीभिः पात्राण्यमृताय सोमाय तत्पानायेत्यर्थः यद्वा युष्माकममृतत्वाय तदर्थं तक्षथ संपादयथ हे कवयोविद्वांसोयूयं गुह्यानि गोपनीयानि पदा पदानि वासस्थानानि कर्तन कुरुत । येन स्थानकरणेन देवासोदेवायूयममृतत्वं आनशुः प्राप्ताः । एवं स्वशिष्यानाह ॥ १० ॥

अथैकादशी–

गर्भेयोषामदधुर्वत्समासन्यपीच्येनमनसोतजिह्वया ।
सविश्वाहासुमनायोग्याअभिसिषासनिर्वनतेकारइज्जितिम् ॥ ११ ॥ १४ ॥

गर्भे । योषाम् । अदधुः । वत्सम् । आसनि । अपीच्येन । मनसा ।
उत । जिह्वया । सः । विश्वाहा । सुऽमनाः । योग्याः । अभि ।
सिसासनिः । वनते । कारः । इत् । जितिम् ॥ ११ ॥ १४ ॥

ते ऋभवोगर्भे मृतायागोर्मध्ये ग्राहके चर्मणि वा मृतायागोः संबन्धिनि योषां कांचिद्गां अदधुः धारितवन्तः । निश्चर्मणोगामरिणीतधीतिभिरितिउक्तं । तथा आसनि मृतायाआस्ये वत्समदधुः । केन साधनेन अपीच्येन मनसा देवत्वमाकांक्षता । उतापिच जिह्वया सादृश्यमधानोयं निर्देशः जिह्वावदायतया वाश्येत्यर्थः यद्वा मनसापिच जिह्वया युक्तां योषामिति संबन्धः सिषासनिः संभजनशीलः सऋभुसन्घः विश्वाहा सर्वेष्वप्यहःसु सर्वदा योग्याः स्वोचिताः सुमनाः । स्तुतीरभिवनते आभिमुख्येन संभजते । सच संघोजितिं शत्रुजयं कारइव कर्तेव शत्रुजयकर्तेव ॥ ११ ॥

॥ इत्यष्टमस्य प्रथमे चतुर्दशोवर्गः ॥ १४ ॥

तांसुतइति पञ्चर्चं द्वादशं सूक्तं वामदेवगोत्रस्य बृहदुक्थस्यार्षं त्रैष्टुभमैन्द्रं । तथाचानुक्रान्तं–तांसुपञ्चबृहदुक्थोवामदेव्यइति । समूह्लस्य दशरात्रस्य द्वितीये छन्दोमे एतत्सूक्तं सूत्रितंच–अपूर्व्यापुरुतमानि तांसुवेकीर्तिमहांइन्द्रेति । महाव्रते निष्केवल्ये एतत्सूक्तं । सूत्रितंच–तांसुतेकीर्तिंमघवन्महित्वाभूयइद्वावृधेवीर्यायेति ।

---

१ ऋ० सं० २. ३. ५ ।

तत्र प्रथमा—

तांसुतेंकीर्तिंमघवन्महित्वायत्त्वाभीतेरोदसीअह्वयेताम् ।
प्रावोदेवाँआतिरोदासमोजःप्रजायैत्वस्यैयदशिक्षइन्द्र ॥ १ ॥

ताम् । सु । ते । कीर्तिम् । मघऽवन् । महिऽत्वा । यत् । त्वा ।
भीते इति । रोदसी इति । अह्वयेताम् । प्र । आवः । देवान् ।
आ । अतिरः । दासम् । ओजः । प्रऽजायै । त्वस्यै । यत् ।
अशिक्षः । इन्द्र ॥ १ ॥

हे इन्द्र मघवन् धनवन् ते तव संबन्धिनीं महित्वा महत्वेनागतां कीर्तिं सुसुष्टु कीर्तयामीति शेषः। किंच यद्यदा त्वा त्वां मति भीते असुरैर्भयं माप्ते रोदसी द्यावापृथिव्यौ अह्वयेतां आगच्छेत्यब्रूतां तदानीं देवान् मावः मारक्षः। तथा दासं देवानामुपक्षयकर्तारं असुरं आतिरः व्यनाशयः असुरान् हत्वा देवानां रक्षणेन द्यावापृथिव्योर्भारं पर्यहरः इति यदस्ति किंचित् त्वस्यै एकस्यै प्रजायै यजमानरूपायै ओजः तद्बलं अशिक्षः प्रायच्छः तांतां कीर्तिं कीर्तयामीत्यर्थः॥ १ ॥

अथ द्वितीया—

यदचरस्तन्वावावृधानोबलानीन्द्रप्रब्रुवाणोजनेषु ।
मायेत्सातेयानियुद्धान्याहुर्नाद्यशत्रुंननुपुराविवित्से ॥ २ ॥

यत् । अचरः । तन्वा । ववृधानः । बलानि । इन्द्र । प्रऽब्रुवाणः ।
जनेषु । माया । इत् । सा । ते । यानि । युद्धानि । आहुः ।
न । अद्य । शत्रुम् । ननु । पुरा । विवित्से ॥ २ ॥

हे इन्द्र तन्वा शरीरेण स्तोत्रेण वा वावृधानोवर्धमानोजनेषुप्राणिषु बलानि प्रब्रुवाणः वृत्रवधादिरूपाणि सामर्थ्यानि मकर्षेण कथयन् अचरः संग्रामं एतवानिति यदस्ति ते तव

सागतिः मायैव मायैव वृथेत्यर्थः। किंच यानि युद्धानि शत्रुविषयाणि आहुः ब्रुवते पुराविद ऋषयः तान्यपि मायैव। कुतइत्याह अद्य इदानीं शत्रुं हन्तव्यं न विवित्से न लभसे अद्यमाभूत्पूर्वं हतवानस्मीति ब्रूषे तदपि नेत्याह नन्विति मश्ने। किं पुरा शत्रुं अलभथाः तदपि नेत्यर्थः ॥२॥

अथ तृतीया—

कउनुतेंमहिमनःसमस्यास्मत्पूर्वऋषयोन्तंमापुः।
यन्मातरंचपितरंचसाकमजनयथास्तन्वः[1]स्वायाः ॥ ३ ॥

के। ऊँ इति। नु। ते। महिमनः। समस्य। अस्मत्। पूर्वे। ऋषयः। अन्तम्। आपुः। यत्। मातरम्। च। पितरम्। च। साकम्। अजनयथाः। तन्वः। स्वायाः ॥ ३ ॥

हेइन्द्र ते तव महिमनः महिम्नः समस्य सर्वस्यापि अन्तं पारं अस्मत् अस्मत्तः पूर्वे ऋषयः के आपुः प्रापुवन् न केपीत्यर्थः। यद्यपि महत्वं मस्यापयन्ति तथापि न कात्स्न्र्येनेति। तत्र कारणमाह—यत् यस्मात् मातरं च पितरं च। द्यौर्वः पितापृथिवीमातेतिहिश्रुतं। अतोद्यावापृथिव्यावित्यर्थः ते उभे अपि साकं सहैवस्वायास्तन्वः स्वकीयाच्छरीरात् अजनयथाः उदपादयः अतोनापुरितिसंबन्धः ॥ ३ ॥

अथ चतुर्थी—

चत्वारितेअसुर्याणिनामादाभ्यानिमहिषस्यसन्ति।
त्वमङ्गतानिविश्वानिवित्सेयेभिःकर्माणिमघवञ्चकर्थ ॥ ४ ॥

चत्वारि। ते। असुर्याणि। नाम। अदाभ्यानि। महिषस्य। सन्ति। त्वम्। अङ्ग। तानि। विश्वानि। वित्से। येभिः। कर्माणि। मघऽवन्। चकर्थ ॥ ४ ॥

---

1 ऋ० सं० २.५.१५।

हे इन्द्र महिषस्य महतः पूज्यस्य ते तव चत्वारि असुर्याणि असुरविघातीनि अदाभ्यानि अन्यैरहिंस्यानि उत्तरसूक्तेउपान्त्यवर्जितेषु दूरेतन्नामेत्यादिषु चतुर्मंत्रेषु प्रतिपादितानि यानि नाम नामकानि शरीराणि सन्ति हे अंग सखे त्वं तानि विश्वानि सर्वाणि वित्से वेत्सि जानासि येभिर्नामभिः कर्माणि वृत्रवधादिरूपाणि चकर्थ कुरुषे हे मघवन् तानि वेत्सीति ॥ ४ ॥

अथ पञ्चमी—

त्वंविश्वांदधिषेकेवंलानियान्याविर्याचुगुहावसूंनि ।
काममिन्मेंमघवन्मावितारीस्त्वमांज्ञातात्वमिंन्द्रासिदाता ॥ ५ ॥

त्वम् । विश्वां । दधिषे । केवंलानि । यानिं । आविः । या । च ।
गुहां । वसूंनि । कामंम् । इत् । मे । मघऽवन् । मा । वि ।
तारीः । त्वम् । आऽज्ञाता । त्वम् । इन्द्र । असि । दाता ॥ ५ ॥

हे इन्द्र त्व विश्वा सर्वाणि केवलानि अन्येषामसाधारणानि वसूनि धनानि दधिषे धारयसि । विश्वानीत्युक्त कथं विश्वत्वमित्यतआह यान्यावि आविर्भूतानि सर्वैः प्रसिद्धानि वसूनि निवासयोग्यानि धनानि सन्ति या च गुहा गुहायां निगूढप्रदेशे वर्तमानानि वसूनि सन्ति तानि विश्वानि दधिषइति । यस्मादेवं तस्मात् मे मम कामं काक्षितं हे मघवन् धनवन्निन्द्र मावितारीः माहिंसीः इत् पूरणे । अपितु वर्धयेति शेषः । हे इन्द्र त्वं आज्ञातासि प्रापयितास्यभिलषितं धन । तथा हे इन्द्र त्व दातासि ॥ ५ ॥

अथ षष्ठी—

योअदंधाज्ज्योतिंषिज्योतिरन्तर्योअसृंजन्मधुनासंमधूंनि ।
अधंप्रियंशूषमिन्द्रांयमन्मंब्रह्मकृतोंबृहदुंक्थादवाचि ॥ ६ ॥ १५॥

यः । अदंधात् । ज्योतिंषि । ज्योतिः । अन्तः । यः । असृंजत् ।
मधुंना । सम् । मधूंनि । अधं । प्रियम् । शूषम् । इन्द्रांय ।
मन्मं । ब्रह्मऽकृतंः । बृहतऽउंक्थात् । अवाचि ॥ ६ ॥ १५॥

यइन्द्रोज्योतिषि ज्योतिष्मति आदित्यादिके तेजस्यन्तः ज्योतिस्तेजः अदधाद्धारितवान् यदा-दित्यादिषु तेजोस्ति तदिन्द्रकृतमित्यर्थः यश्च मधुना मधुरेण रसेन निमित्तेन मधूनि सोमानि मधुरद्रव्याणि समसृजत् समयोजयत्। यद्वा मधुनाअत्र मधुशब्देन सर्वैः सेव्यमानआदित्यउच्यते तेन सह मधून्युदकानि समसृजत्। अध संप्रति तस्माइन्द्राय प्रियं प्रियजनकं शूषं बलं शत्रूणां शोषकत्वात् बलकरं मन्म मननीयं स्तोत्रं ब्रह्मकृतोब्रह्मकृतोबृहदुक्थात् प्रभूतशस्त्रयुक्ता-देतन्नामकादृषेर्मेत्तोवाचि उक्तमभूत् ॥ ६ ॥

॥ इत्यष्टमस्य प्रथमे पंचदशोवर्गः ॥ १५ ॥

दूरेतदित्यष्टर्चं त्रयोदशं सूक्तं ऋष्याद्याः पूर्ववत्। दूरइत्यनुक्रान्तं। गतः सूक्तविनियोगः।

तत्र प्रथमा—

दूरेतन्नामगुह्यंपराचैर्यत्त्वाभीतेअह्वयेतांवयोधै।
उदस्तभ्नाःपृथिवींद्यामभीकेभ्रातुःपुत्रान्मघवन्तित्विषाणः ॥ १ ॥

दूरे। तत्। नाम। गुह्यम्। पराचैः। यत्। त्वा। भीते इति।
अह्वयेताम्। वयःऽधै। उत्। अस्तभ्नाः। पृथिवीम्। द्याम्।
अभीके। भ्रातुः। पुत्रान्। मघऽवन्। तित्विषाणः ॥ १ ॥

अनया चत्वारिंशेअसुर्याणि नामेत्युक्तस्य आद्यंनाम स्तूयते हे इन्द्र ते तव तद्वक्ष्यमाणं नाम सर्वेषां नामकं शरीरं पराचैः पराङ्मुखैर्मनुष्याणामित्यर्थः गुह्यं गोपनीयं अप्रकाशितं सत् दूरे इतोविप्रकृष्टे दूरदेशे वर्तते इतिशेषः यद्यदा त्वा त्वां रोदसी द्यावापृथिव्यौ भीते सत्यौ अह्वयेतां। किमर्थं वयोधे अन्नस्य निधानार्थं जगतोन्नसाधनायेत्यर्थः तदानीं तेन शरीरेण अभीके अन्तिकनामैतत् तव समीपएव पृथिवीं द्यां च उत् ऊर्ध्वं परस्परवियुक्तं यथा भवति तथा अस्तभ्नाः स्तंभितवानसि। किं कुर्वन् हे मघवन् इन्द्र भ्रातुः पर्जन्यस्य पुत्रान् पुत्रस्था-नीयान् उदकराशीन् तित्विषाणः दीपयन्निति विद्युद्रूपमिन्द्रमाह विद्युद्रूपेन्द्रविवाजयने-यकं। यद्वा पर्जन्यरूपमाह तदानीं वायुरस्येन्द्रस्य भ्रातावगंतव्यः ॥ १ ॥

अथ द्वितीया—

म॒हत्तन्नाम॒ गुह्यं॑ पुरु॒स्पृग्ये॑न भू॒तं ज॒नयो॒ येन॒ भव्य॑म् ।
प्र॒त्नं जा॒तं ज्योति॒र्यद॑स्य प्रि॒यं प्रि॒याः सम॑विशन्त॒ पञ्च॑ ॥ २ ॥

म॒हत् । तत् । नाम॑ । गुह्य॑म् । पु॒रु॒ऽस्पृक् । येन॑ । भू॒तम् । ज॒नय॑ः ।
येन॑ । भव्य॑म् । प्र॒त्नम् । जा॒तम् । ज्योति॑ः । यत् । अ॒स्य॒ ।
प्रि॒यम् । प्रि॒याः । सम् । अ॒वि॒श॒न्त॒ । पञ्च॑ ॥ २ ॥

हे इन्द्र तव तद्गुह्यं गोपनीयं अन्यैरविज्ञातं पुरुस्पृक् बहुभिर्वृष्ट्यार्थिभिः स्पृहणीयं आकाशात्मकं नाम शरीरं महत् अत्यंतं प्रवृद्धं येन नाम्ना भूतं भव्यं च सर्वं जनयः उत्पादितवानसि भूतभव्योभयान्वयाय येनेत्यस्यावृत्तिः आकाशात्मकाद्धि परमेश्वरस्वरूपात् भूतभव्यात्मकंजगदुत्पद्यते । आकाशाद्वायुरित्यादिश्रुतेः । किंच प्रत्नं पुराणं पूर्वकालीनं यज्ज्योतिः द्योतमानं आदित्याख्यमुदकाख्यं वा अस्येन्द्रस्य प्रियं प्रियभूतं तत्वं जातमुत्पन्नं तत्तत्वं प्रियाः प्रीयमाणाः पञ्च पञ्चजनाइतिशेषः भीमइति वदेकदेशलक्षणा । निषादपंचमाश्चत्वारोवर्णाः समविशन्त संविशन्ते स्वनिर्वाहार्थं भजन्तइत्यर्थः ॥ २ ॥

अथ तृतीया—

आ रोद॑सी अपृणा॒दोत मध्यं॒ पञ्च॑ दे॒वाँ ऋ॑तु॒शः स॒प्तस॑प्त ।
चतु॑स्त्रिंशता पुरु॒धा वि च॑ष्टे॒ सरू॑पेण॒ ज्योति॑षा॒ विव्र॑तेन ॥ ३ ॥

आ । रोद॑सी॒ इति॑ । अ॒पृ॒णा॒त् । आ । उ॒त । मध्य॑म् । पञ्च॑ । दे॒वान् ।
ऋ॒तु॒ऽशः । स॒प्तऽस॑प्त । चतु॑ःऽत्रिंशता । पु॒रु॒धा । वि ।
च॒ष्टे॒ । सऽरू॑पेण । ज्योति॑षा । विऽव्र॑तेन ॥ ३ ॥

अयमिन्द्रःसूर्यात्मकः आत्मीयेन शरीरेण तेजसा वा रोदसी द्यावापृथिव्यौ आ सर्वतः अपृणात् पूरयति उतापिच मध्यं द्युभूम्यपेक्षया मध्यमभूत अन्तरिक्षं आअपृणादिति वर्तते तदपि स्वशरीरेण तेजसा वा पूरयति । किंच पंचदेवान् देवमनुष्यपितृअसुररक्षःसंज्ञकान्

तथासप्त द्विरुक्त्या सप्तसंख्याकानि तत्वानि लोके यानि सन्ति तानि परिगृह्यन्ते कानि तानीति सप्तमरुद्गणान् सप्तादित्यरश्मीन् सप्तलोकान् अन्यानपि सप्तसंख्योपेतान् ऋतुशः काले-काले चतुस्त्रिंशता चतुस्त्रिंशत्संख्याकदेवगणेन पुरुधा बहुप्रकारं विचष्टे विपश्यति सर्वदे-क्षते अष्टौवसवएकादशरुद्राद्वादशादित्याः प्रजापतिश्चवषट्कारश्च विराट्चेति चतुस्त्रिंशद्देवाः। केनेति तदुच्यते—सरूपेण समानरूपेण ज्योतिषा प्रकाशकेन विव्रतेन विविधेन कर्मणा ॥ ३ ॥

अथ चतुर्थी—

यदुंषऔच्छंःप्रथमाविभानामजंनयोयेनंपुष्टस्यंपुष्टम् ।
यत्तेंजामित्वमवंरंपरंस्यामहन्मंहत्याअंसुरत्वमेकंम् ॥ ४ ॥

यत् । उषः । औच्छः । प्रथमा । विऽभानाम् । अजनयः । येन । पुष्टस्य । पुष्टम् । यत् । ते । जामिऽत्वम् । अवंरम् । परस्याः । महत् । महत्याः । असुरऽत्वम् । एकम् ॥ ४ ॥

अथप्रसंगात् सूर्यात्मकेन्द्रसंबधिनी उषाःस्तूयते हे उषः उषोदेवते विभानां विभासकानां ग्रहनक्षत्रादीनां प्रथमा प्रथमभूता सती औच्छः विभातमकरोः अग्रेहुपसः प्रादुर्भवन्ति पश्चात् अन्यानि तेजांसि येन च तेजसा पुष्टस्य पोषयुक्तस्यापि पदार्थस्य मध्ये पुष्टं अतिशयेन पोषयुक्तमादित्यं अजनयः उदपादयः। यत् यच्च ते तव जामित्वं बान्धवं अवरं अवाङ्मुखं अस्मदभिमुखमित्यर्थः कीदृश्यास्ते तवेतिपरस्याः उपरि स्थितायाइत्यर्थः तदिदं महत्यास्तव महत् अतिप्रवृद्धं एकं असाधारणं एकमेव वा असुरत्वं प्रकृष्टबलवत्वं तव बलेन कृतमित्यर्थः ॥ ४ ॥

महाव्रते निष्केवल्ये विधुंदद्राणमित्येषा । सूत्रितंच—आयाह्यर्वाङुपबन्धुरेष्ठाविधुंदद्राणमिति ।

सेषा पञ्चमी—

विधुंदंद्राणंसमनेबहूनांयुवानंसन्तंपलितोजंगार ।
देवस्यंपश्यकाव्यंमहित्वाद्यामुमारसह्यःसमान ॥ ५ ॥ १६ ॥

शेषेस्तोत्रफलमेवाम्नातम् इन्द्रियावन्तोवनेमहिभक्षीमहिप्रजामिषमिति नतुदेवताप्रयुक्तंफल-मान्नातम् अतोनदेवतासंस्कारः किन्तु प्रधानकर्मेतिस्थितम् । अनेनतुनिर्णयेनप्रयो-जनंविकृतिषूहाभावः । संस्कारपक्षेतुयस्यांविकृतौदेवतान्तरं तत्रतद्वाचकंपदमूहनीयंस्यात् तन्माभूदितिप्रधानकर्मत्वमुक्तम् । एतच्चदशमाध्यायेसूत्रितम्—ग्रहाणांदेवतान्यत्वेस्तुतश-स्त्रयोःकर्मत्वादविकारःस्यादिति । अत्रसङ्ग्रहश्लोकौ—प्रउगंशंसतीत्यादौगुणतोनप्रधान-ता । दृष्टादेवस्मृतिस्तेनगुणतास्तोत्रशस्त्रयोः ॥ १ ॥ स्मृत्यर्थत्वेस्तौतिशंस्योर्धात्वोःश्रौ-तार्थबाधनम् । तेनादृष्टमुपेत्यापिप्राधान्यंश्रुतयेमतमिति ॥ २ ॥ अग्निष्टोमेसुत्यादिनेसूर्योदयात्पू-र्वमेपितोहोताप्रातरनुवाकमनुब्रूयात् एतच्चैतरेयब्राह्मणेप्रपञ्चितम्—देवेभ्यःप्रातर्यावभ्योहोतरनु-ब्रूहीत्याहाध्वर्युरित्यादिब्राह्मणम् । तस्मिंश्चप्रातरनुवाकेऽग्निमीळइत्यादिसूक्तमन्तर्भूतम् तच्च-व्याख्यातम् । प्रातःसवने वैश्वदेवग्रहणादूर्ध्वंप्रउगशस्त्रंहोत्राशंसनीयम् तच्चशस्त्रंवायवाया-हीत्यादिसप्ततृचात्मकम् एतच्चब्राह्मणेग्रहोक्थमित्यादिखण्डेप्रपञ्चितम् । तथापञ्चमाध्यायेस्तो-त्रमग्रेशस्त्रादित्यादिखण्डेसूत्रितंच । अत्रेयमनुक्रमणिका—वायोवायव्यैन्द्रवायवमैत्रावरुणास्तृचाः अश्विनाद्वादशाश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाःसप्तैता प्रउगदेवताइति । अस्यायमर्थः—वायवायाहीत्यादिकंनवर्चंसूक्तम् अश्विनेत्यतोनवशब्दस्यानुवृत्तेः तत्राद्यस्तृचोवायुदेवता-कः द्वितीयऐन्द्रवायवदेवताकः तृतीयोमित्रावरुणदेवताकः अश्विनेत्यादिकंद्वादशर्चंसूक्तम् तत्राद्यस्तृचआश्विनः द्वितीयऐन्द्रः तृतीयोवैश्वदेवः चतुर्थःसारस्वतः तेपुतृचेपुप्रतिपाद्यावा-य्वादयःसरस्वत्यन्ताःसप्तसंख्याकाः प्रउगशस्त्रस्यदेवताइति । मधुच्छन्दसोऽनुवर्तनात्सएव ऋषिः तथैवानुवृत्त्यागायत्रंछन्दः वायव्येतृचेप्रथमाग्रहस्यैन्द्रवायवस्यैकापुरोनुवाक्या एतच्च ब्राह्मणेसमाम्नातम्—वायव्यापूर्वापुरोनुवाक्यैन्द्रवायव्युत्तरेति । तथासूत्रितंच—वायवायाहिदर्श-तेन्द्रवायूइमेसुताइत्यनुवाक्येइति ।

वायव्यतृचेप्रथमामृचमाह—

**वायवायाहिदर्शतेमेसोमाअरंकृताः । तेषांपाहिश्रुधीहवम् ॥ १ ॥**

वायो इति । आ । याहि । दर्शत । इमे । सोमाः । अरम्ऽकृताः ।
तेषाम् । पाहि । श्रुधि । हवम् ॥ १ ॥

दर्शतहेदर्शनीयवायो कर्मण्येतस्मिन्नायाहि आगच्छ त्वदर्थमिमेसोमाअरंकृताः अलं-

१ जैमिनीयसूत्रेद्वितीयाध्यायस्यप्रथमपादेपञ्चमाधिकरणे ( २. १. ५. )।
२ ऐ० ब्रा० २. १५ । ३ ऐ० ब्रा० ३ १ । ४ ऐ० ब्रा० २ २६ ।

कृताः अभिषवादिसंस्कारोऽलङ्कारस्तेषांतान्सोमान् यद्वा तेषामेकदेशमित्यध्याहारः पाहिस्व-कीयंभागंपिबेत्यर्थः तत्पानार्थंहवमस्मदीयमाह्वानंश्रुधिशृणु । अत्रयास्कः—वायवायाहिद-र्शनीयेमेसोमाअरङ्कृताअलङ्कृतास्तेषांपिबशृणुनोह्वानमिति[1] ॥ दर्शतेत्यत्र भृमृदृशीत्यादिसूत्रे-णातच्प्रत्ययऔणादिकः चित्त्वादन्तोदात्तस्यामन्त्रितानुदात्तत्वम् । अर्तिस्तुसुहुइत्यादिनामन्प्रत्य-यान्तस्यसोमशब्दस्यनिस्स्वरः । अलमित्यत्रछान्दसोरेफादेशः अरङ्कृतशब्देसमासान्तोदात्तत्वं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरप्राप्तौभूषणेऽलमित्यलंशब्दस्यगतिसंज्ञायांगतिकारकेत्यादिनाकृ-दुत्तरपदप्रकृतिस्वरत्वेप्राप्ते तदपवादत्वेनगतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् निपातत्वादलं-शब्दआद्युदात्तः । पाहीत्यत्रपिबादेशाभावश्छान्दसः । श्रुधीत्यत्रश्रुशृणुपॄकृवृभ्यश्छन्दसीतिहेर्धिभावः तिङन्तादुत्तरस्यनिघातोनास्ति सेर्ह्यपिच्चेतिपित्त्वनिषेधात् अनुदात्तेनिवारितेप्रत्ययस्वरः । हवमित्यत्रह्वयतिधातोर्बहुलंछन्दसीतिसंप्रसारणेसत्युकारान्तत्वात् ऋदोरबित्यप्प्रत्ययः तस्यपि-त्त्वादनुदात्तेसतिधातुस्वरःशिष्यते । संहितायांश्रुधिइत्यस्यान्येषामपिदृश्यतेइतिदीर्घः ॥ १ ॥

द्वितीयामृचमाह—

वाय॑उ॒क्थेभि॑र्जरन्ते॒त्वामच्छा॑जरि॒तारः॑ । सु॒तसो॑माअह॒र्विदः॑ ॥ २ ॥

वायो॒ इति॑ । उ॒क्थेभिः॑ । ज॒र॒न्ते॒ । त्वाम् । अच्छ॑ । ज॒रि॒तारः॑ ।

सु॒तऽसो॑माः । अ॒हः॒ऽविदः॑ ॥ २ ॥

हेवायोजरितारःस्तोतारः ऋत्विग्यजमानास्त्वामच्छत्वामभिलक्ष्य उक्थेभिराज्यप्रउ-गादिशस्त्रैर्जरन्तेस्तुवन्ति कीदृशाःसुतसोमाः अभिषुतेनसोमेनोपेताः अहर्विदः अहःशब्द-एकेनाह्नानिष्पाद्येप्रिष्टोमादिक्रतौवैदिकव्यवहारेणप्रसिद्धः ऋत्विज्ञाइत्यर्थः अर्चतिगायती-त्यादिषुचतुश्चत्वारिंशत्स्वर्चतिकर्मसुधातुषु जरते ह्वयतीतिपठितम् स्तुतेरप्यर्चनाविशेषत्वादौचि-त्येनात्रस्तुत्यर्थोजरतिधातुः ॥ अच्छशब्दस्यसंहितायांनिपातस्यचेतिदीर्घः । सुतसोमाइत्यत्रबहु-व्रीहित्वात्पूर्वपदप्रकृतिस्वरः । अहर्विदइत्यत्रसमासस्वरंबाधित्वातत्पुरुषेतुल्यार्थेतिद्वितीयापूर्वप-दप्रकृतिस्वरेप्राप्ते तदपवादत्वेनगतिकारकेतिकृदुत्तरपदप्रकृतिस्वरः ॥ २ ॥

तृतीयामृचमाह—

वायो॒तव॑प्रपृञ्च॒तीधेना॑जिगाति॒दा॒शुषे॑ । उ॒रू॒चीसोम॑पीतये ॥ ३ ॥

वायो॒ इति॑ । तव॑ । प्र॒ऽपृ॒ञ्च॒ती । धेना॑ । जि॒गा॒ति॒ । दा॒शुषे॑ । उ॒रू॒ची ।

सोम॑ऽपीतये ॥ ३ ॥

---

१ नि० १०.२०.।

हेवायोतवधेनावाक्सोमपीतयेसोमपानार्थंदाशुषेदाश्वांसंदत्तवन्तंयजमानंजिगातिगच्छति हेयजमान त्वयादत्तंसोमंपास्यामीत्येवंवायुर्ब्रूतइत्यर्थः कीदृशीधेना प्रपृञ्चती प्रकर्षेणसोमसंपर्ककुर्वन्ती सोमगुणंवर्णयन्तीत्यर्थः उरूचीउरूब्बहून्यजमानान्गच्छन्ती येयेसोमयाजिनस्तान्सर्वान्वर्णयन्तीत्यर्थः ॥ प्रपृञ्चतीत्यत्रशतुरनुमइतिङीबुदात्तः श्लोकःधारेत्यादिषुसप्तपञ्चाशत्सुवाङ्नामसु गणः धेना ग्राइतिपठितम्। वर्तते अयतेइत्यादिपुद्वाविंशाधिकशतसंख्येषुगतिकर्मसु गातिजिगातीतिपठितम्।दाशुषइत्यत्रगत्यर्थकर्मणीतिचतुर्थी। उरूचीइत्यत्रगौरादित्वेनङीषिकृतेप्रत्ययस्वरः। सोमपीतयइत्यत्रबहुव्रीहित्वाभावेऽपिव्यत्ययेनपूर्वपदप्रकृतिस्वरः ॥ ३ ॥

ऐन्द्रवायवेतृचेप्रथमामृचमाह—

इन्द्र॑वायूइ॒मेसु॒ताउप॒प्रयो॑भि॒राग॑तम्। इन्द॑वोवामु॒शन्ति॒हि ॥ ४ ॥

इन्द्र॑वायू इति॑। इ॒मे। सु॒ताः। उप॑। प्रयः॑ऽभिः। आ। ग॒त॒म्।

इन्द॑वः। वा॒म्। उ॒शन्ति॑। हि ॥ ४ ॥

एतस्याऋचऐन्द्रवायवग्रहेद्वितीयापुरोऽनुवाक्यारूपेणविशेषविनियोग.पूर्वमेवोक्तः हेइन्द्रवायू भवदर्थमिमेसोमाःसुताअभिषुताः तस्माद्युवांप्रयोभिरन्नैरस्मभ्यंदातव्यैःसहउपागतम् अस्मत्समीपंप्रत्यागच्छतम् हियस्मादिन्दवःसोमावांयुवामुशन्ति कामयन्ते तस्मादागमनमुचितम् ॥ इन्द्रवायूशब्दस्यामन्त्रिताद्युदात्तत्वम्। प्रीणयन्तिभोक्तॄनितिप्रयांस्यन्नानि प्रीञ्धातोरन्तर्भावितण्यर्थादसुन्प्रत्ययेसतिनित्स्वरः गमिधातोर्लोण्मध्यमपुरुषद्विवचनेबहुलंछन्दसीतिशपोलुकिसत्यनुदात्तोपदेशेत्यादिनामकारलोपः ततोगतमितिभवति। उन्दीक्लेदनेइतिधातोरुन्देरिच्चादेरित्युप्रत्ययः आद्याक्षरस्येकारादेशः ततइन्दुशब्दस्यनित्स्वरः सोमरसस्यद्रवत्वात्क्लेदनंसंभवति। युष्मच्छब्दादेशस्यवामित्येतस्यअनुदात्तंसर्वमपादादावित्यनुदात्तः। उशन्तीत्यस्यनिघाते हिचेतिसूत्रेणप्रतिषिद्धेसतिप्रत्ययस्वरः।हिशब्दस्यनिपातस्वरः॥४॥

द्वितीयामृचमाह—

वाय॒विन्द्र॑श्चचेतथ॒सु॒ताना॑वाजिनीवसू। तावाया॑त॒मुप॑द्र॒वत् ॥ ५ ॥ ३ ॥

वायो॒ इति॑। इन्द्रः॑। च॒। चे॒त॒थः॒। सु॒ताना॑म्। वा॒जि॒नी॒व॒सू॒ इति॑

वाजिनीऽवसू। तौ। आ। या॒त॒म्। उप॑। द्र॒वत् ॥ ५ ॥ ३ ॥

अत्रचकारेणान्यःसमुच्चीयते सन्निहितत्वाद्वायुरेव हेवायो त्वमिन्द्रश्चयुवामुभौसुतानामभिषुतान्सोमान्चेतथोजानीथः यद्वा अभिषुतानांसोमानांविशेषमित्यध्याहारः कीदृशौयुवांवाजिनीवसू वाजिनीशब्दोयद्यप्युषोनामसुपठितः तथाप्यत्रासंभवान्नगृह्यते वाजोऽ-

